रायहाणी, एवं मालवन्तस्स कूडस्स उत्तरकुरुकूडस्स कच्छकूडस्स, एए चत्तारि कूडा दिसाहिं पमाणेहिं णेअव्वा, कूडसरिसणामया देवा, कहि णं भन्ते! मालवन्ते सागरकूडे नामं कूडे पण्णत्ते?, गोअमा! कच्छकूडस्स उत्तरपुरत्थिमेणं रययकूडस्स दक्खिणेणं एत्थ णं सागरकूडे णामं कूडे पण्णत्ते, पंच जोअणसयाइं उद्धं उच्चत्तेणं अवसिट्ठं तं चेव सुभोगा देवी रायहाणी उत्तरपुरत्थिमेणं रययकूडे भोगमालिणी देवी रायहाणी उत्तरपुरत्थिमेणं, अवसिट्ठा कूडा उत्तरदाहिणेणं णेअव्वा एक्केणं पमाणेणं ( सूत्रं ९१ )

'से केणट्ठेण'मित्यादि, प्रतीतं, नवरं उत्तरकुरुनामाऽत्र देवः परिवसति, तेनेमा उत्तरकुरव इत्यर्थः, अथ यस्मादुत्तरकुरवः पश्चिमायामुक्तास्तं माल्यवन्तं नाम द्वितीयं गजदन्ताकारगिरिं प्ररूपयति—'कहि ण'मित्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे—गौतम! मन्दरस्य पर्वतस्य उत्तरपौरस्त्ये—ईशानकोणे नीलवतो वर्षधरपर्वतस्य दक्षिणस्यामुत्तरकुरूणां पूर्वस्यां कच्छनामचक्रवर्त्तिविजयस्य पश्चिमायामत्रान्तरे महाविदेहेषु माल्यवन्नाम्ना वक्षस्कारपर्वतः प्रज्ञप्त इति शेषः, पूर्वदक्षिणयोरायतः पूर्वपश्चिमयोर्विस्तीर्णः, किं बहुना विस्तरेण?, यदेव गन्धमादनस्य पूर्वोक्तवक्षस्कारगिरेः प्रमाणं विष्कम्भश्च तदेव ज्ञातव्यमिति शेषः, नवरमिदं नानात्वं—अयं विशेषः, सर्वात्मना वैडूर्यरत्नमयः, अवशिष्टं तदेव, कियत्पर्यन्तमित्याह—'जाव'त्ति, सुलभं, नवरं उत्तरसूत्रे उक्तमपि सिद्धायतनकूटं यत्पुनरुच्यते 'सिद्धे य मालवन्ते' इति तद् गाथाबन्धेन सर्वसंग्रहार्थमिति, सिद्धायतनकूटं चः पादपूरणे माल्यवत्कूटं प्रस्तुतवक्षस्काराधिपतिवासकूटं उत्तरकुरुकूटं—उत्तरकुरुदेवकूटं कच्छकूटं—कच्छविजयाधिपकूटं सागरकूटं रजतकूटं, इदं चान्यत्र रुचकमिति प्रसिद्धं, शीताकूटं—शी-

तासरित्सुरीकूटं, पदैकदेशे पदसमुदायोपचार इति सिद्धिः, चः समुच्चये, पूर्णभद्रनाम्नो व्यन्तरेशस्य कूटं पूर्णभद्रकूटम्, हरिस्सहनाम्न उत्तरश्रेणिपतिविद्युत्कुमारेन्द्रस्य कूटं हरिस्सहकूटं, चैवशब्दः पूर्ववत्, सम्प्रत्यमीषां स्थानप्ररूपणायाह— 'कहि ण'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे मन्दरस्य पर्वतस्य उत्तरपूर्वस्यां–ईशानकोणे प्रत्यासन्नमाल्यवत्कूटस्य दक्षिणपश्चिमायां नैर्ऋतकोणे, अत्र सिद्धायतनकूटं प्रज्ञप्तमिति गम्यं, पञ्च योजनशतान्यूर्ध्वोच्चत्वेन अवशिष्टं मूलविष्कम्भादिकं वक्तव्यं तदेव गन्धमादनसिद्धायतनकूटवदेव वाच्यं, यावद्राजधानी भणितव्या स्यात्, अयमर्थः–सिद्धायतनकूटवर्णके सामान्यतः कूटवर्णकसूत्रं विशेषतः सिद्धायतनादिवर्णकसूत्रं च द्वयमपि वाच्यं, तत्र सिद्धायतनकूटे राजधानीसूत्रं न सङ्गच्छते इति राजधानीसूत्रं विहाय तदधस्तनसूत्रं वाच्यमिति, अत्र यावच्छब्दो न संग्राहकः किन्त्ववधिमात्रसूचकः, यथा 'आसमुद्रक्षितीशाना'मित्यत्र समुद्रं विहाय क्षितीशत्वं वर्णितमिति, लाघवार्थमत्रातिदेशमाह— 'एवं मालवन्तस्स' इत्यादि, एवं सिद्धायतनकूटरीत्या माल्यवत्कूटस्य उत्तरकुरुकूटस्य कच्छकूटस्य वक्तव्यं, ज्ञेयमिति गम्यं, अथैतानि किं परस्परं स्थानादिना तुल्यानि उतातुल्यानीत्याह—एतानि सिद्धायतनकूटसहितानि चत्वारि परस्परं दिग्भिरीशानविदिग्रूपाभिः प्रमाणैश्च नेतव्यानि, तुल्यानीति शेषः, अयमर्थः–प्रथमं सिद्धायतनकूटं मेरोरुत्तरपूर्वस्या दिशि ततस्तस्य दिशि द्वितीयं माल्यवत्कूटं ततस्तस्यामेव दिशि तृतीयमुत्तरकुरुकूटं ततोऽप्यस्यां दिशि कच्छकूटं, एतानि चत्वार्यपि कूटानि विदिग्भावीनि मानतो हिमवत्कूटप्रमाणानीति, कूटसदृशनामकाश्चात्र देवाः, अत्र 'यावत्स-

ऽभावं विधिप्राप्ति'रिति न्यायात् सिद्धकूटवर्जेषु त्रिषु कूटेषु कूटनामका देवा इति बोध्यं, सिद्धायतनकूटे तु सिद्धायतनं, अन्यथा–"छसयरि कूडेसु तहा चूलाचउ वणतरूसु जिणभवणा। भणिआ जम्बुदीवे सदेवया सेस ठाणेसु॥१॥" इति सोपज्ञक्षेत्रविचारे रत्नशेखरसूरिवचो विरोधमापद्येतेति, अथात्रशिष्टकूटस्वरूपमाह—'कहि ण'मित्यादि, प्रश्नसूत्रं सुगमम्, उत्तरसूत्रे कच्छकूटस्य चतुर्थस्योत्तरपूर्वस्यां रजतकूटस्य दक्षिणस्यामत्रान्तरे सागरकूटं नाम कूटं प्रज्ञप्तं, पञ्चयोजनशतान्यूर्ध्वोच्चत्वेन अवशिष्टं मूलविष्कम्भादिकं तदेव, अत्र सुभोगानाम्नी दिक्कुमारी देवी अस्या राजधानी मेरोरुत्तरपूर्वस्यां, रजतकूटं षष्ठं पूर्वस्यामुत्तरस्यां अत्र भोगमालिनी दिक्कुमारी पुरी राजधानी उत्तरपूर्वस्यां, अवशिष्टानि शीताकूटादीनि उत्तरदक्षिणस्यां नेतव्यानि, कोऽर्थः ?–पूर्वस्मात् २ उत्तरोत्तरमुत्तरस्यां २ उत्तरस्मादुत्तरस्मात्पूर्वं २ दक्षिणस्यां २ इत्यर्थः, एकेन तुल्येन प्रमाणेन सर्वेषामपि हिमवत्कूटप्रमाणत्वात्। अथ नवमं सहस्राङ्कमिति पृथग्निर्दिशमाह—

कहि णं भन्ते! मालवन्ते हरिस्सहकूडे णामं कूडे पण्णत्ते? गोयमा! पुण्णभद्दस्स उत्तरेणं णीलवन्तस्स दक्खिणेणं एत्थ णं हरिस्सहकूडे णामं कूडे पण्णत्ते, एगं जोयणसहस्सं उद्धं उच्चत्तेणं जमगपमाणेणं णेअव्वं, रायहाणी उत्तरेणं असंखेज्जे दीवे अण्णंमि जम्बुद्दीवे दीवे उत्तरेणं बारस जोअणसहस्साइं ओगाहित्ता एत्थ णं हरिस्सहस्स देवस्स हरिस्सहाणामं रायहाणी पण्णत्ता, चउरासीइं जोअणसहस्साइं आयामविक्खम्भेणं बे जोअणसयसहस्साइं पण्णट्ठिं च सहस्साइं छच्च छत्तीसे जोअणसए परिक्खेवेणं सेसं जहा चमरचञ्चाए रायहाणीए तहा पमाणं भाणिअव्वं, महिद्धीए महज्जुईए, से केणट्ठेणं भन्ते! एवं वुच्चइ मालवन्ते वक्खार-

पव्वए २', गोअमा! मालवन्ते णं वक्खारपव्वए तत्थ तत्थ देसे तहिं २ बहवे सरिआगुम्मा णोमालिआगुम्मा जाव मगदन्तिआगुम्मा, ते णं गुम्मा दसद्धवण्णं कुसुमं कुसुमेंति, जे णं तं मालवन्तस्स वक्खारपव्वयस्स बहुसमरमणिज्जं भूमिभागं वायविधुअग्गसालामुक्कपुप्फपुञ्जोवयारकलिअं करेंति, मालवंते अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गोअमा! एवं वुच्चइ, अदुत्तरं च णं जाव णिच्चे (सूत्र ९२)

'कहि ण'मित्यादि, क्व भदन्त! माल्यवति वक्षस्कारगिरौ हरिस्सहकूटं नाम कूटं प्रज्ञप्तम्?, गौतम! पूर्णभद्रस्योत्तरस्यां नीलवतो वर्षधरपर्वतस्य दक्षिणस्यां अत्रान्तरे हरिस्सहकूटं नाम कूटं प्रज्ञप्तं, एकं योजनसहस्रमूर्ध्वोच्चत्वेन अवशिष्टं यमकगिरिप्रमाणेन नेतव्यं, तच्चेदम्—'अद्धाइज्जाइं जोअणसयाइं उव्वेहेणं मूले एगं जोअणसहस्सं आयामविक्खम्भेण'मित्यादि, आह परः—५०० योजनपृथुगजदन्ते १००० योजनपृथु इदं कथमिति, उच्यते, अनेन गजदन्तस्य ५०० योजनानि रुद्धानि ५०० योजनानि पुनर्गजदन्ताद्बहिराकाशे ततो न कश्चिद्दोष इति, अस्य चाधिपस्यापरराजधानीतो दिक्प्रमाणार्थविशेष इति तां विवक्षुराह—'रायहाणी'इत्यादि. राजधानी उत्तरस्यामिति, एतदेव विवृणोति—'असंखेज्जदीवे'त्तिपदं स्मारकं तेन 'मन्दरस्स पव्वयस्स उत्तरेणं तिरिअमसंखेज्जाइं दीवसमुद्दाइं वीईवइत्ता' इति ग्राह्यम्, अन्यस्मिन् जम्बूद्वीपे द्वीपे उत्तरस्यां द्वादशयोजनसहस्राण्यवगाह्य अत्रान्तरे हरिस्सहदेवस्य हरिस्सहनाम्नी राजधानी प्रज्ञप्ता चतुरशीतियोजनसहस्राण्यायामविष्कम्भाभ्यां द्वे योजनलक्षे पञ्चषष्टिं च योजनसहस्राणि

पद्य च द्वात्रिंशदधिकानि योजनशतानि परिक्षेपेण, शेषं यथा चमरचञ्चायाः—चमरेन्द्रराजधान्याः प्रमाणं भणितं भगवत्यङ्गे तथा प्रमाणं प्रासादादीनां भणितव्यमिति, 'महिड्ढीए महज्जुईए' इति सूत्रेणास्य नामनिमित्तनिगमके प्रश्ननिर्वचने सूचिते, ते चैवं—'से केणट्ठेणं भन्ते ! एवं वुच्चइ हरिस्सहकूडे २ ?, गोअमा ! हरिस्सहकूडे बहवे उप्पलाइं पउमाइं हरिस्सहकूडप्पमाणाइं जाव हरिस्सहे णामं देवे अ इत्थ महिड्ढीए जाव परिवसइ, से तेणट्ठेणं जाव अदुत्तरं च णं गोअमा ! जाव सासए णामधेज्जे' इति, अथास्य वक्षस्कारस्य नामार्थं प्रश्नयति—'से केणट्ठेण'मित्यादि, प्रश्नार्थः प्राग्वत्, उत्तरसूत्रे गौतम ! माल्यवति वक्षस्कारपर्वते तत्र तत्र देशे—स्थाने तस्मिन् तस्मिन् प्रदेशे—देशैकदेशे इत्यर्थः बहवः सरिकागुल्माः नवमालिकागुल्माः यावन्मगदन्तिकागुल्माः सन्तीति शेषः, ते गुल्माः क्षेत्रानुभावतः सदैव पञ्चवर्णं कुसुमं कुसुमयन्ति—जनयन्ति इत्यर्थः, ते गुल्मास्तं माल्यवतो वक्षस्कारपर्वतस्य बहुसमरमणीयं भूमिभागं वातविधुताग्रशाखामुक्तपुष्पपुञ्जोपचारकलितं कुर्वन्ति, एतदर्थः प्राग्वत्, ततो माल्यं—पुष्पं नित्यमस्यास्तीति माल्यवान्, माल्यवान्नामा देवश्चात्र महर्द्धिको यावत्पल्योपमस्थितिकः तेन तद्योगादयमपि माल्यवान्, 'अथापरं चे'त्यादि, प्राग्वत् ॥

इह द्विविधा विदेहाः, तद्यथा—पूर्वविदेहा अपरविदेहाश्च, तत्र ये मेरोः प्राक् ते पूर्वविदेहाः ते च शीतया महानद्या दक्षिणोत्तरभागाभ्यां द्विधा विभक्ताः, एवं ये मेरोः पश्चिमायां ते अपरविदेहास्तेऽपि तथैव शीतोदया द्विधा विभक्ताः, एवं विदेहाना चत्वारो भागाः दर्शिता., तत्सकलेषु विजयवक्षस्काराद्व्यवस्थाऽपरार्थं पिण्डार्थगत्या

सूत्रकृद्दर्शयिष्यमाणरीत्या बोधनीयानां दुर्बोधा इति विस्तरतो निरूप्यते, तत्रैकैकस्मिन् भागे यथायोगं माल्यवदा-देर्गजदन्ताकारवक्षस्कारगिरेः समीपे एको विजयः तथा चत्वारः सरलवक्षस्कारास्तिस्रश्चान्तर्नद्यः, एषां सप्तानां वस्तूनामन्तराणि षट्, सर्वत्राप्यन्तराणि रूपोनानि भवन्ति तथाऽत्र, प्रतीतमेतच्चतसृणामङ्गुलीनामभ्यन्तरालानि त्रीणीति, ततोऽन्तरे २ एकैकसद्भावात् षड् विजयाः, एते चत्वारो वक्षस्कारादय एकैकान्तरनद्याऽन्तरितास्ततश्चतुर्णामत्रीणामन्तरे सम्भवत्यन्तरनदीत्रयमिति व्यवस्था स्वयमवगन्तव्या, तथा वनमुखमङ्गीकृत्यैको विजय इति प्रतिविभागं सिद्धा अष्टौ विजयाः चत्वारो वक्षस्कारास्तिस्रोऽन्तरनद्यो वनमुखं चैकमिति, इयमत्र भावना—पूर्वविदेहेषु माल्यवतो गजदन्तपर्वतस्य पूर्वतः शीताया उत्तरत एको विजयः, ततः पूर्वस्यां प्रथमो वक्षस्कारः ततोऽपि पूर्वस्यां द्वितीयो विजयः ततोऽपि पूर्वस्यां प्रथमान्तरनदी, अनेन क्रमेण तृतीयो विजयः द्वितीयो वक्षस्कारः चतुर्थो विजयः द्वितीयान्तरनदी पञ्चमो विजयः तृतीयो वक्षस्कारः षष्ठो विजयः तृतीयान्तरनदी सप्तमो विजयः चतुर्थो वक्षस्कारः अष्टमो विजयः ततश्चैकं वनमुखं जगत्यासन्नं, एवं शीताया दक्षिणतोऽपि सौमनसगजदन्तपर्वतस्य पूर्वतोऽयमेव विजयादिक्रमो वाच्यः, तथा पश्चिमविदेहेषु शीतोदाया दक्षिणतो विद्युत्प्रभस्य पश्चिमतोऽप्ययमेव क्रमः, तथा शीतोदाया उत्तरतोऽपि गन्धमादनस्य पश्चिमत इति । अथ प्रादक्षिण्येन निरूपणेऽयमेव हि आद्य इति, प्रथमविभागमुखे कच्छविजयं विवक्षुराह—

कहि णं भन्ते! जम्बुद्दीवे दीवे महाविदेहे वासे कच्छे णामं विजए पण्णत्ते?, गोअमा! सीआए महाणईए उत्तरेणं णीलवन्तस्स वासहरपव्वयस्स दक्खिणेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं मालवन्तस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे २ महाविदेहे वासे कच्छे णामं विजए पण्णत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे पलिअंकसंठाणसंठिए गंगासिंधूहिं महाणईहिं वेअड्ढेण य पव्वएणं छब्भागपविभत्ते सोलस जोअणसहस्साइं पंच य बाणउए जोअणसए दोण्णि अ एगूणवीसइभाए जोअणस्स आयामेणं दो जोअणसहस्साइं दोण्णि अ तेरसुत्तरे जोअणसए किंचिविसेसूणे विक्खम्भेणंति। कच्छस्स णं विजयस्स बहुमज्झदेसभाए एत्थ णं वेअड्ढे णामं पव्वए पण्णत्ते, जे णं कच्छं विजयं दुहा विभयमाणे २ चिट्ठइ, तंजहा—दाहिणद्धकच्छं च उत्तरद्धकच्छं चेति, कहि णं भन्ते! जम्बुद्दीवे दीवे महाविदेहे वासे दाहिणद्धकच्छे णामं विजए पं०?, गोअमा! वेअड्ढस्स पव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं मालवन्तस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे दाहिणद्धकच्छे णामं विजए प० उत्तरदाहिणायए पाईणपडीणविच्छिण्णे अट्ठ जोअणसहस्साइं दोण्णि अ एगसत्तरे जोअणसए एक्कं च एगूणवीसइभागं जोअणस्स आयामेणं दो जोअणसहस्साइं दोण्णि अ तेरसुत्तरे जोअणसए किंचिविसेसूणे विक्खम्भेणं पलिअंकसंठाणसंठिए, दाहिणद्धकच्छस्स णं भन्ते! विजयस्स केरिसए आयारभावपडोआरे पण्णत्ते?, गोअमा! बहुसमरमणिज्जे भूमिभागे पण्णत्ते, तंजहा—जाव कत्तिमेहिं चेव अकत्तिमेहिं चेव, दाहिणद्धकच्छे णं भन्ते! विजए मणुआणं केरिसए आयारभावपडोआरे पण्णत्ते?, गोअमा! तेसि णं मणुआणं छव्विहे संघयणे जाव सव्वदुक्खाणमन्तं करेंति। कहि णं भन्ते! जम्बुद्दीवे दीवे महाविदेहे वासे कच्छे विजए वेअड्ढे णामं पव्वए?, गोअमा! दाहिणद्ध-

जाव दोहिं वणसंडेहिं संपरिक्खित्ता । कहि णं भन्ते! उत्तरद्धकच्छविजए उसभकूडे णामं पव्वए पण्णत्ते?, गोअमा! सिंधुकुंडस्स पुरत्थिमेणं गंगाकुण्डस्स पच्चत्थिमेणं णीलवन्तस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे एत्थ णं उत्तरद्धकच्छविजए उसहकूडे णामं पव्वए पण्णत्ते, अट्ठ जोयणाइं उद्धं उच्चत्तेणं तं चेव पमाणं जाव रायहाणी से णवरं उत्तरेणं भाणिअव्वा । कहि णं भन्ते! उत्तरद्धकच्छे विजए गंगाकुण्डे णामं कुण्डे पण्णत्ते?, गोअमा! चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं उसहकूडस्स पव्वयस्स पुरत्थिमेणं णीलवन्तस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे एत्थ णं उत्तरद्धकच्छे गंगाकुण्डे णामं कुण्डे पण्णत्ते सट्ठिं जोअणाइं आयामविक्खम्भेणं तहेव जहा सिंधू जाव वणसंडेण य संपरिक्खित्ता । से केणट्ठेणं भन्ते! एवं वुच्चइ कच्छे विजए कच्छे विजए?, गोअमा! कच्छे विजए वेअड्ढस्स पव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं गंगाए महाणईए पच्चत्थिमेणं सिंधूए महाणईए पुरत्थिमेणं दाहिणद्धकच्छविजयस्स बहुमज्झदेसभाए, एत्थ णं खेमा णामं रायहाणी पं० विणीआरायहाणीसरिसा भाणिअव्वा, तत्थ णं खेमाए रायहाणीए कच्छे णामं राया समुप्पज्जइ, महया हिमवन्त जाव सव्वं भरहोअवणं भाणिअव्वं निक्खमणवज्जं सेसं सव्वं भाणिअव्वं जाव भुंजए माणुस्सए सुहे, कच्छणामधेज्जे अ कच्छे इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोअमा! एवं वुच्चइ कच्छे विजए कच्छे विजए जाव णिच्चे ( सूत्रं ९३ )

'कहि णं भन्ते'त्ति क्व भदन्त! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे कच्छो नाम विजयः प्रज्ञप्तः?, गौतम! शीताया महानद्या उत्तरस्यां नीलवतो वर्षधरपर्वतस्य दक्षिणस्यां चित्रकूटवक्षस्कारपर्वतस्य पश्चिमायां माल्यवतो गजदन्ताकारवक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे महाविदेहे वर्षे कच्छो नाम चक्रवर्तिविजेतव्यभूमिभागरूपो विजयः

प्रशस्तः, सर्वात्मना विजेतव्यश्चक्रवर्त्तिनामिति विजयः अनादिप्रवाहनिपतितैवं संज्ञा तेनेदमन्वर्थमात्रदर्शनं न तु साक्षात्प्रवृत्तिनिमित्तोपदर्शनमिति, उत्तरदक्षिणाभ्यामायतः पूर्वापरविस्तीर्णः पल्यङ्कसंस्थानसंस्थितः आयतचतुरस्रत्वात्, गङ्गासिन्धुभ्यां महानदीभ्यां वैताढ्येन च पर्वतेन षड्भागप्रविभक्तः षट्खण्डीकृत इत्यर्थः, एवमन्येऽपि विजया भाव्याः, परं शीताया उदीच्याः कच्छादयः शीतोदाया याम्याः पक्ष्मादयो गङ्गासिन्धुभ्यां षोढा कृताः, शीताया याम्या वत्सादयः शीतोदाया उदीच्या वप्रादयो रक्तारक्तवतीभ्यामिति, उत्तरदक्षिणायतेति विवृणोति—षोडश योजनसहस्राणि पञ्चयोजनशतानि द्विनवत्यधिकानि द्वौ चैकोनविंशतिभागौ योजनस्यायामेन, अत्रोपपत्तिर्यथा—विदेहविस्तारात् योजन ३३६८४ कला ४ रूपात् शीतायाः शीतोदाया वा विष्कम्भो योजन ५०० रूपः शोध्यते, शेषस्यार्द्धे लभ्यते यथोक्तं मानं, इह यद्यपि शीतायाः शीतोदाया वा समुद्रप्रवेशे एव पञ्चशतयोजनप्रमाणो विष्कम्भोऽन्यत्र तु हीनो हीनतरस्तथापि कच्छादिविजयसमीपे उभयकूलवर्त्तिनो रमणप्रदेशावधिकृत्य पञ्चयोजनशतप्रमाणो विष्कम्भः प्राप्यत इति, प्राचीनप्रतीचीनेति विवृणोति—द्वे योजनसहस्रे द्वे च योजनशते त्रयोदशोत्तरे किञ्चिदूने, अत्राप्युपपत्तिर्यथा—इह महाविदेहेषु देवकुरूत्तरकुरुमेरुभद्रशालवनवक्षस्कारपर्वतान्तरनदीवनमुखव्यतिरेकेणान्यत्र सर्वत्र विजयाः, ते च पूर्वापरविस्तृतास्तुल्यविस्ताराः, तत्रैकस्मिन् दक्षिणभागे उत्तरभागे वाऽष्टौ वक्षस्कारगिरयः, एकैकस्य पृथुत्वं पंचयोजनशतानि, सर्ववक्षस्कारपृथुत्वमीलने चत्वारि योजनसहस्राणि, अन्तरनद्यश्च

यद् एकैकस्याश्चान्तरनद्या विष्कम्भः पंचविंशं योजनशतं ततः सर्वान्तरनदीपृथुत्वमीलने जातानि सप्त शतानि पंचाशदधिकानि ७५०, द्वे च वनमुखे एकैकस्य वनमुखस्य पृथुत्वमेकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२, उभयपृथुत्वमीलने जातानि अष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, मेरुपृथुत्वं दशसहस्राणि १००००, पूर्वापरभद्रशालवनयोरायामश्चतुश्चत्वारिंशत्सहस्राणि ४४०००, सर्वमीलने जातानि चतुःषष्टिसहस्राणि पंचशतानि चतुर्नवत्यधिकानि ६४५९४, एतज्जम्बूद्वीपविस्तारात् शोध्यते, शोधिते च सति जातं शेषं पंचत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, एकैकस्मिंश्च दक्षिणे उत्तरे वा भागे विजयाः षोडश, ततः षोडशभिर्भागे हृते लब्धानि द्वाविंशतिशतानि किंचिन्न्यूनत्रयोदशाधिकानि २२१२, त्रयोदशस्य योजनस्य षोडशचतुर्दशभागात्मकत्वात्, एतावानेकैकस्य विजयस्य विष्कम्भः । अयं च भरतवद्वैताढ्येन द्विधाकृत इति तत्र तं विवक्षुराह—'कच्छस्स णं'मित्यादि, कच्छस्य विजयस्य बहुमध्यदेशभागे वैताढ्यः पर्वतः प्रज्ञप्तः, यः कच्छं विजयं द्विधा विभजन्नवतिष्ठति, तद्यथा—दक्षिणार्द्धकच्छं चोत्तरार्द्धकच्छं च, चशब्दौ उभयोस्तुल्यकक्षताद्योतनार्थौ । दक्षिणार्द्धकच्छं स्थानतः पृच्छन्नाह—'कहि णं'मित्यादि, क्व भदन्त! जम्बूद्वीपे द्वीपे महाविदेहवास्ते वर्षे दक्षिणार्द्धकच्छो नाम विजयः प्रज्ञप्तः?, गौतम! वैताढ्यपर्वतस्य दक्षिणस्यां शीताया महानद्या उत्तरस्यां चित्रकूटस्य वक्षस्कारपर्वतस्य पश्चिमायां माल्यवतो वक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे द्वीपे यावद् दक्षिणार्द्धकच्छो नाम विजयः प्रज्ञप्तः, उत्तरेत्यादिविशेषणद्वयं प्राग्वद् बोध्यं,

अष्टौ योजनसहस्राणि द्वे च एकसप्तत्युत्तरे योजनशते एकं चैकोनविंशतिभागं योजनस्यायामेन, एतदङ्कोत्पत्तिश्च षोडशसहस्रपञ्चशतद्विनवतियोजनकलाद्वयरूपात् कच्छविजयमानात् पंचाशद्योजनप्रमाणे वैताढ्यव्यासे(ऽपनीते ततोऽ)र्द्धीकृते भवति, शेषं प्राग्वद् अयं च कर्मभूमिरूपोऽकर्मभूमिरूपो वेति निर्णेतुमाह—'दाहिणद्ध'इत्यादि, दक्षिणार्द्धभरतप्रकरण इवेदं निर्विशेषं व्याख्येयं, अत्र मनुजस्वरूपं पृच्छति—'दाहिण'इत्यादि, कण्ठ्यं, अथास्य सीमाकारिणं वैताढ्य इति नाम्ना प्रतीतं गिरिं स्थानतः पृच्छति—'कहि ण'मित्यादि, स्पष्टं, नवरं द्विधा वक्षस्कारपर्वतौ—माल्यवच्चित्रकूटवक्षस्कारौ स्पृष्टः, इदमेव समर्थयति—पूर्वया कोट्या यावत्करणात् 'पुरत्थिमिल्लं वक्खारपव्वयं पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं वक्खारपव्वयं'इति बोध्यं, तेन पौरस्त्यं वक्षस्कारं—चित्रकूटं नामानं पाश्चात्यया कोट्या पाश्चात्यं वक्षस्कारं—माल्यवन्तं, अत एव द्वाभ्यां कोटिभ्यां स्पृष्टः, भरतवैताढ्यसदृशकः रजतमयत्वात् रुचकसंस्थानसंस्थितत्वाच्च, नवरं द्वे वाहे जीवा धनुःपृष्ठं च न कर्त्तव्यमवक्रक्षेत्रवर्त्तित्वात्, लम्बभागश्च न भरतवैताढ्यसदृश इत्याह—विजयस्य कच्छादेर्यो विष्कम्भः—किंचिदूनत्रयोदशाधिकद्वाविंशतिशतयोजनरूपस्तेन सदृश आयामेन, कोऽर्थः?—विजयस्य यो विष्कम्भभागः सोऽस्यायामविभाग इति, विष्कम्भः—पंचाशद्योजनरूपः, उच्चत्वं—पंचविंशतियोजनरूपं उद्वेधः—पंचविंशतिक्रोशात्मकस्तथैव—भरतवैताढ्यवदेवेत्यर्थः, उच्चत्वस्य प्रथमदशयोजनातिक्रमे विद्याधरश्रेण्यौ तथैव, नवरमिति विशेषः पंचपंचाशत् २ विद्याधरनगरावासाः प्रज्ञप्ताः, एकैकस्या श्रेण्याँ—दक्षिणश्रेणौ उत्तरश्रेणौ वा, भरतवैताढ्ये तु

दक्षिणतः पञ्चाशदुत्तरतस्तु षष्टिर्नगराणीति भेदः, आभियोग्यश्रेणी तथैवेति गम्यं, कोऽर्थः?—विद्याधरश्रेणिभ्यामूर्ध्वं दशयोजनातिक्रमे दक्षिणोत्तरभेदेन द्वे भवतः, अत्राधिकारात् सर्ववैताढ्याभियोग्यश्रेणिविशेषमाह—उत्तरदिक्स्थाः आभियोग्यश्रेणयः शीताया महानद्या ईशानस्य—द्वितीयकल्पेन्द्रस्य शेषाः—शीतादक्षिणस्थाः शक्रस्य—आद्यकल्पेन्द्रस्य, किमुक्तं भवति?—शीताया उत्तरदिशि ये विजयवैताढ्यास्तेषु या आभियोग्यश्रेणयो दक्षिणगा वा उत्तरगा वा ताः सर्वाः सौधर्मेन्द्रस्येति, बहुवचनं चात्र विजयवर्त्तिसर्ववैताढ्यश्रेण्यपेक्षया द्रष्टव्यं, अथ कूटानि वक्तव्यानीति तदुद्देशमाह—'कूडा' इति, व्यक्तम्, अथ तन्नामान्याह—'सिद्धे' इत्यादि, पूर्वस्यां प्रथमं सिद्धायतनकूटं, ततः पश्चिमदिगभिमुखमेतान्यष्टावपि कूटानि वाच्यानि, तद्यथा—द्वितीयं दक्षिणकच्छार्द्धकूटं, तृतीयं खण्डप्रपातगुहाकूटं चतुर्थं माणीति पदैकदेशे पदसमुदायोपचारात् माणिभद्रकूटं शेषं व्यक्तं, परं विजयवैताढ्येषु सर्वेष्वपि द्वितीयाष्टमकूटे स्वस्वविजयनामके यथा द्वितीयं दक्षिणकच्छार्द्धकूटं अष्टमुत्तरकच्छार्द्धकूटं इतराणि भरतवैताढ्यकूटसमनामकानीति । अथोत्तरार्द्धकच्छं प्रश्नयति—'कहि णं' इत्यादि, व्यक्तं, तथैव दक्षिणार्द्धकच्छाद् ज्ञेयं यावद्भिलापानीति. नवैतदन्तर्वर्त्तिसिन्धुकुण्डं वक्तव्यमित्याह—'कहि णं' इत्यादि, व्यक्तं, परं नितम्बः—कटकः, लाघवार्थमतिदेशमाह—'भरहसिंधुकुण्डसरिसं सव्वं णेअव्वं' इत्यादि, सर्वं गतार्थं, गङ्गागमेन व्याख्यानत्वात्, तथैव ऋषभकूटवक्तव्यमाह—'कहि णं' इत्यादि, प्राग्वत्, अथ गङ्गाकुण्डप्रस्तावनार्थमाह—'कहि णं' इत्यादि, सिन्धुकुण्डगमो निर्वि-

शेषः सर्वोऽपि वाच्यः, परं ततो गङ्गानदी खण्डप्रपातगुहाया अधो वैताढ्यं विभिद्य दक्षिणे भागे शीतां समुपसर्पतीति, ननु भरते नदीमुख्यत्वेन गङ्गामुपवर्ण्य सिन्धुरुपवर्णिता इह तु सिन्धुरुपवर्ण्य सा वर्ण्यते इति कथं व्यत्ययः?, उच्यते, इह माल्यवद्वक्षस्कारतो विजयप्ररूपणायाः प्रक्रान्तत्वेन तदासन्नत्वात् सिन्धुकुण्डस्य प्रथमं सिन्धुप्ररूपणा ततो गङ्गाया इति। अथ केनार्थेन भदन्त! एवमुच्यते कच्छो विजयः कच्छो विजयः?, गौतम! कच्छे विजये वैताढ्यस्य दक्षिणस्यां शीताया महानद्या उत्तरस्यां गङ्गायाः महानद्याः पश्चिमायां सिन्धोर्महानद्याः पूर्वस्यां दक्षिणार्द्धकच्छविजयस्य बहुमध्यदेशभागे—मध्यखण्डेऽत्रान्तरे क्षेमानाम्ना राजधानी प्रज्ञप्ता, विनीताराजधानीसदृशी भणितव्या, विनीतावर्णकः सर्वोऽप्यत्र वाच्य इत्यर्थः, तत्र क्षेमायां राजधान्यां कच्छो नाम—राजा चक्रवर्त्ती समुत्पद्यते, कोऽर्थः?—यस्तत्र षट्खण्डभोक्ता समुत्पद्यते स तत्र लोकैः 'कच्छ' इति व्यवह्रियते, अत्र वर्त्तमाननिर्देशेन सर्वदापि यथासम्भवं चक्रवर्त्युत्पत्तिः सूचिता, न तु भरत इव चक्रवर्त्युत्पत्तौ कालनियम इति, 'महयाहिमवन्ते'त्यादिकः सर्वो ग्रन्थो वाच्यः यावत्सर्वं भरतस्य क्षेत्रस्य ओअवणमिति—साधनं स्वायत्तीकरणं भरतस्य चक्रिण इति शेषः, निष्क्रमणं—प्रव्रज्याप्रातपत्तिस्तद्वर्जं भणितव्यं, भरतचक्रिणा सर्वविरतिर्गृहीता कच्छचक्रिणस्तु तद्ग्रहणेऽनियम इति, कियत्पर्यन्तमित्याह—यावद् भुङ्क्ते मानुष्यकानि सुखानि, अथवा कच्छनामधेयश्चात्र कच्छे विजये देवः पल्योपमस्थितिकः परिवसति तेनार्थेन गौतम! एवमुच्यते—कच्छराजस्वामिकत्वात् कच्छदेवाधिष्ठितत्वाच्च कच्छविजयः २ इति, यावन्नित्य इत्यन्त-

स्काराणां च तुल्यायामत्वात्, तेन तत्करणं प्राग्वदेव, विष्कम्भे तु पञ्च योजनशतानीति विशेषस्तेन, ननु तानि कथमिति, उच्यते, जम्बूद्वीपपरिमाणविष्कम्भात् षण्णवतिसहस्रेषु शोधितेषु अवशिष्टानि चत्वारि सहस्राणि एकस्मिन् दक्षिणभागे उत्तरे वाऽष्टौ वक्षस्कारगिरयस्ततोऽष्टभिर्विभज्यन्ते, ततः समायाते वक्षस्काराणां प्रत्येकं पूर्वोक्तो विष्कम्भः, इह हि विदेहेषु विजयान्तरनदीमुखवनमेर्वादिव्यतिरेकेणान्यत्र सर्वत्र वक्षस्कारगिरयस्ते पूर्वापरविस्तृताः सर्वत्र तुल्यविस्तारास्ततोऽस्य करणस्यावकाशः, तत्र विजयषोडशकपृथुत्वं पंचत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, अन्तरनदीषट्कपृथुत्वं सप्त शतानि पंचाशदधिकानि ७५० मेरुविष्कम्भपूर्वापरभद्रशालवनायामपरिमाणं चतुःपंचाशत्सहस्राणि ५४००० मुखवनद्वयपृथुत्वमष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, सर्वमीलने जातानि षण्णवतिसहस्राणि ९६००० इति, तथा नीलवद्वर्षधरपर्वतसमीपे चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतशतानि उद्वेधेन तदनन्तरं च मात्रया २—क्रमेण २ उत्सेधोद्वेधपरिवृद्ध्या परिवर्द्धमानः २, यत्र यावदुच्चत्वं तत्र तच्चतुर्थभाग उद्वेध इति द्वाभ्यां मकाराभ्यामधिकतरो२भवन्नित्यर्थः, शीतामहानद्यन्ते पंचयोजनशतान्यूर्ध्वोच्चत्वेन पंचगव्यूतशतान्युद्वेधेन, अत एवाश्वस्कन्धसंस्थानसंस्थितः प्रथमतोऽतुङ्गत्वात् क्रमेणान्ते तुङ्गत्वात्, सर्वरत्नमयः, शेषं प्राग्वत्। अथास्य शिरसः सौभाग्यमावेदयति—'चित्तकूडस्स ण'मित्यादि, व्यक्तं, अथात्र कूटसङ्ख्यार्थं पृच्छति—'चित्तकूडे'इत्यादि, पदयोजना सुलभा, भावार्थस्त्वयम्—परस्परमेतानि चत्वार्यपि कूटानि उत्तरदक्षिणभावेन समानि—तुल्यानीत्यर्थः, तथाहि—प्रथमं

सिद्धायतनकूटं द्वितीयस्य चित्रकूटस्य दक्षिणस्यां चित्रकूटं च सिद्धायतनकूटस्योत्तरस्यां, एवं प्राक्तनं प्राक्तनं अग्रेतनात् अग्रेतनाद्दक्षिणस्यां अग्रेतनमग्रेतनं प्राक्तनात् २ उत्तरस्यां ज्ञेयं, तर्हि शीतानीलवतोः कस्यां दिशि इमानीत्याह— प्रथमकं शीताया उत्तरतः चतुर्थकं नीलवतो वर्षधरपर्वतस्य दक्षिणत इति, सूत्रपाठोक्तक्रमबलात् द्वितीयं चित्रनामकं प्रथमादनन्तरं ज्ञेयं, तृतीयं कच्छनामकं चतुर्थादर्वाक् ज्ञेयमिति, चित्रकूटादिषु वक्षस्कारेष्वेवं कूटनामनिवेशो पूर्वेषां सम्प्रदायः—आद्यं सिद्धायतनकूटं महानदीसमीपतो गण्यमानत्वात् द्वितीयं स्वस्ववक्षस्कारनामकं तृतीयं पाश्चात्यविजयनामकं चतुर्थं प्राच्यविजयनामकमिति, अथास्य नामार्थं प्ररूपयति—'एत्थ ण'मित्यादि, अत्र चित्रकूटनामा देवः परिवसति तद्योगाच्चित्रकूट इति नाम, अस्य राजधानी मेरोरुत्तरतः शीताया उत्तरदिग्भाविवक्षस्काराधिपतित्वात्, एवमग्रेतनेष्वपि वक्षस्कारेषु यथासम्भवं वाच्यमिति ॥ गतः प्रथमो वक्षस्कारः, अधुना द्वितीयविजयप्रस्तावः—

कहि णं भंते! जम्बुद्दीवे दीवे महाविदेहे वासे सुकच्छे णामं विजए पण्णत्ते?, गोयमा! सीआए महाणईए उत्तरेणं णीलवंतस्स वासहरपव्वयस्स दाहिणेणं गाहावईए महाणईए पच्चत्थिमेणं चित्तकूडस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे सुकच्छे णामं विजए पण्णत्ते, उत्तरदाहिणायए जहेव कच्छे विजए तहेव सुकच्छे विजए, णवरं खेमपुरा रायहाणी सुकच्छे राया समुप्पज्जइ तहेव सव्वं। कहि णं भंते! जम्बुद्दीवे २ महाविदेहे वासे गाहावइकुंडे पण्णत्ते?, गो० सुकच्छविजयस्स पुरत्थिमेणं महाकच्छस्स विजयस्स पच्चत्थिमेणं णीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितम्बे एत्थ णं जम्बु-

दीवे दीवे महाविदेहे वासे गाहावइकुंडे णामं कुण्डे पण्णत्ते, जहेव रोहिअंसाकुण्डे तहेव जाव गाहावइदीवे भवणे, तस्स णं गाहावइस्स कुण्डस्स दाहिणिल्लेणं तोरणेणं गाहावई महाणई पवूढा समाणी सुकच्छमहाकच्छविजए दुहा विभयमाणी २ अट्ठावीसाए सलिलासहस्सेहिं समग्गा दाहिणेणं सीअं महाणइं समप्पेइ, गाहावई णं महाणई पवहे अ मुहे अ सव्वत्थ समा पणवीसं जोअणसयं विक्खम्भेणं अड्ढाइज्जाइं जोअणाइं उव्वेहेणं उभओ पासिं दोहि अ पउमवरवेइआहिं दोहि अ वणसण्डेहिं जाव दुण्हवि वण्णओ इति । कहि णं भन्ते! महाविदेहे वासे महाकच्छे णामं विजए पण्णत्ते?, गोअमा! णीलवन्तस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं पम्हकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं गाहावईए महाणईए पुरत्थिमेणं एत्थ णं महाविदेहे वासे महाकच्छे णामं विजए पण्णत्ते, सेसं जहा कच्छविजयस्स जाव महाकच्छे इत्थ देवे महिद्धीए अट्ठो अ भाणिअव्वो । कहि णं भन्ते! महाविदेहे वासे पम्हकूडे णामं वक्खारपव्वए पण्णत्ते?, गोअमा! णीलवन्तस्स दक्खिणेणं सीआए महाणईए उत्तरेणं महाकच्छस्स पुरत्थिमेणं कच्छावईए पच्चत्थिमेणं एत्थ णं महाविदेहे वासे पम्हकूडे णामं वक्खारपव्वए पण्णत्ते, उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा चित्तकूडस्स जाव आसयन्ति, पम्हकूडे चत्तारि कूडा पं० तं०—सिद्धायणकूडे पम्हकूडे महाकच्छकूडे कच्छावइकूडे एवं जाव अट्ठो, पम्हकूडे इत्थ देवे महद्धिए पलिओवमट्ठिईए परिवसइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ । कहि णं भन्ते! महाविदेहे वासे कच्छगावती णामं विजए पं० ?, गो०! णीलवन्तस्स दाहिणेणं सीआए महाणईए उत्तरेणं दहावतीए महाणईए पच्चत्थिमेणं पम्हकूडस्स पुरत्थिमेणं एत्थ णं महाविदेहे वासे कच्छगावती णामं विजए पं० उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा कच्छस्स विजयस्स जाव कच्छगावई अ इत्थ देवे, कहि णं भन्ते! महाविदेहे वासे

वई जाव कुण्डे पण्णत्ते तं चेव गाहावइकुण्डप्पमाणं जाव मंगलावत्तपुक्खलावत्तविजये दुहा विभयमाणी २ अवसेसं तं चेव जं चेव गाहा-
वईए । कहि णं भन्ते ! महाविदेहे वासे पुक्खलावत्ते णामं विजए पण्णत्ते ?, गोयमा ! णीलवन्तस्स दाहिणेणं सीआए उत्तरेणं पंकावईए
पुरत्थिमेणं एगसेलस्स वक्खारपव्वयस्स पच्चत्थिमेणं, एत्थ णं पुक्खलावत्ते णामं विजए पण्णत्ते जहा कच्छविजए तहा भाणिअव्वं
जाव पुक्खले अ इत्थ देवे महिड्ढिए पलिओवमट्ठिइए परिवसइ, से एएणट्ठेणं० कहि णं भन्ते ! महाविदेहे वासे एगसेले णामं वक्खा-
रपव्वए पं० ?, गो० ! पुक्खलावत्तचक्कवट्टिविजयस्स पुरत्थिमेणं पोक्खलावईचक्कवट्टिविजयस्स पच्चत्थिमेणं णीलवन्तस्स दक्खिणेणं
सीआए उत्तरेणं, एत्थ णं एगसेले णामं वक्खारपव्वए पण्णत्ते चित्तकूडगमेणं णेअव्वो जाव देवा आसयन्ति, चत्तारि कूडा, तं०—
सिद्धाययणकूडे एगसेलकूडे पुक्खलावत्तकूडे पुक्खलावईकूडे, कूडाणं तं चेव पञ्चसइअं परिमाणं जाव एगसेले अ देवे महिड्ढीए ।
कहि णं भन्ते ! महाविदेहे वासे पुक्खलावई णामं चक्कवट्टिविजए पण्णत्ते ?, गोअमा !, णीलवन्तस्स दक्खिणेणं सीआए उत्तरेणं
उत्तरिल्लस्स सीआमुहवणस्स पच्चत्थिमेणं एगसेलस्स वक्खारपव्वयस्स पुरत्थिमेणं, एत्थ णं महाविदेहे वासे पुक्खलावई णामं विजए
पण्णत्ते, उत्तरदाहिणायए एवं जहा कच्छविजयस्स जाव पुक्खलावई अ इत्थ देवे परिवसइ, एएणट्ठेणं० । कहि णं भन्ते ! महा-
विदेहे वासे सीआए महाणईए उत्तरिल्ले सीआमुहवणे णामं वणे प० ?, गोअमा ! णीलवन्तस्स दक्खिणेणं सीआए उत्तरेणं पुरत्थि-
मलवणसमुद्दस्स पच्चत्थिमेणं पुक्खलावइचक्कवट्टिविजयस्स पुरत्थिमेणं, एत्थ णं सीआमुहवणे णामं वणे पण्णत्ते उत्तरदाहिणायए
पाईणपडीणविच्छिण्णे सोलसजोअणसहस्साइं पञ्च य बाणउए जोअणसए दोण्णि अ एगूणवीसइभाए जोअणस्स आयामेणं
सीआए महाणईए अन्तेणं दो जोअणसहस्साइं नव य बावीसे जोअणसए विक्खम्भेणं तयणंतरं च णं मायाए २ परिहायमाणे २

सीआमहाणईपवाहपवत्तणंतो एगं पणुवीसइभागं जोअणस्स विक्खंभेणंति, से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं संपरिक्खित्ते दुण्हवि वण्णओ सीआमुहवणस्स जाव देवा आसयन्ति, एवं उत्तरिल्लं पासं समत्तं । विजया भणिआ । रायहाणीओ इमाओ—खेमा १ खेमपुरा २ चेव, रिट्ठा ३ रिट्ठपुरा ४ तहा । खग्गी ५ मंजूसा ६ अविअ, ओसही ७ पुंडरीगिणी ८ ॥ १ ॥ सोलस विज्जाहरसेढीओ तावइआओ अभिओगसेढीओ सव्वाओ इमाओ ईसाणस्स, सव्वेसु विजएसु कच्छवत्तव्वया जाव अट्ठो रायाणो सरिसणामगा विजएसु सोलसण्हं वक्खारपव्वयाणं चित्तकूडवत्तव्वया जाव कूडा चत्तारि २ बारसण्हं णईणं गाहावइवत्तव्वया जाव उभओ पासिं दोहिं पउमवरवेइआहिं वणसंडेहि अ वण्णओ ( सूत्रं ९५ )

'कहि णं'इत्यादि, सर्वं सुगमं कच्छवक्तव्यत्वात्, नवरं खेमपुरा राजधानी सुकच्छस्य राजा चक्रवर्ती समुत्पद्यते, विजयसाधनादिकं तथैव सर्वं वक्तव्यमिति शेषः । उक्तः सुकच्छः, अथ प्रथमान्तरनदीप्रस्तावः—'कहि णं भन्ते !'इत्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावत्या अन्तरनद्याः कुण्डं—प्रभवस्थानं ग्राहावतीकुण्डनाम कुण्डं प्रज्ञप्तम् ?, गौतम ! सुकच्छस्य विजयस्य पूर्वस्यां महाकच्छस्य विजयस्य पश्चिमायां नीलवतो वर्षधरपर्वतस्य दाक्षिणात्ये नितम्बे, अत्र—सामीपिकेऽधिकरणे सप्तमी तेन नितम्बसमीपे इत्यर्थः, अत्र जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावतीकुण्डं प्रज्ञप्तं, यथैव रोहितांशाकुण्डं तथैवमपि विंशत्यधिकशतयोजनायामविष्कम्भमित्यादिरीत्या ज्ञेयं, कियद्वक्तव्यमित्याह—यावद् ग्राहावती द्वीपे भवनं इति, उपलक्षणं चैतत्, तेनार्थेन सूत्रमपि भावनीयम्,

तथाहि—'से केणट्ठेणं भन्ते! एवं वुच्चइ गाहावई दीवे गाहावई दीवे?, गोअमा! गाहावई दीवे णं बहूइं उप्पलाइं जाव सहस्सपत्ताइं गाहावईदीवसमप्पभाइं समवण्णाइं' इत्यादि, अथास्माद्या नदी प्रवहति तामाह—'तस्स ण'मित्यादि व्यक्तं, नवरं ग्राहाः—तन्तुनामानो जलचरा महाकायाः सन्त्यस्यामिति ग्राहावती, मतुप्प्रत्यये मस्य वत्वे ङीप्रत्यये रूपसिद्धिः दीर्घत्वं चाऽऽकृतिगणत्वात् 'अनजिरादिबहुस्वरशरादीनां मतौ' (श्रीसिद्ध०अ०३पा०२ सू०७८) विस्य-नेन, महानदी प्रव्यूढा सती सुकच्छमहाकच्छौ विजयौ द्विधा विभजन्ती २ अष्टाविंशत्या नदीसहस्रैः समग्रा—सहिता दक्षिणेन भागेन—मेरोर्दक्षिणदिशि शीतां महानदीं समुपसर्पति, अथास्य विष्कम्भादिकमाह—'गाहावई ण'मित्यादि, ग्राहावती महानदी प्रवहे—ग्राहावतीकुण्डनिर्गमे मुखे—शीताप्रवेशे च सर्वत्र मुखप्रवहयोरन्यत्रापि स्थाने समा—सम-विस्तरोद्वेधा, एतदेव दर्शयति—पंचविंशत्यधिकं योजनशतं विष्कम्भेन, अर्द्धतृतीयानि योजनान्युद्वेधेन, सपादशत-योजनाना पंचाशत्तमभागे एतावत एव लाभात्, पृथुत्वं च प्रागवत्, तथाहि—महाविदेहेषु कुरुमेरुभद्रशालविजयवक्ष-स्कारमुखवनव्यतिरेकेणान्यत्र सर्वत्रान्तरनद्यः, ताश्च पूर्वापरविस्तृतास्तुल्यविस्तारप्रमाणास्तत एव तत्करणावकाशः, तत्र मेरुविष्कम्भपूर्वापरभद्रशालवनायामप्रमाणं चतुःपंचाशत्सहस्राणि विजय१६पृथुत्वं पंचत्रिंशत्सहस्राणि चतुः-शतानि षडुत्तराणि वक्षस्कार ८ पृथुत्वं चत्वारि सहस्राणि मुखवनद्वय २ पृथुत्वं ५८४४, सर्वमीलनेन नवनवतिसह-स्राणि द्वे शते पंचाशदधिके, एतज्जम्बूद्वीपविष्कम्भलक्षाच्छोध्यते शोधिते च जातं सप्तशतानि पंचाशदग्राणि, एतच्च

स्पष्टं, नवरं यावत्पदात् 'तत्थ णं अरिट्ठाए रायहाणीए महाकच्छे णामं राया समुप्पज्जइ, महया हिमवन्त जाव सव्वं भरहोअवणं भाणिअव्वं, णिक्खमणवज्जं सेसं भाणिअव्वं, जाव भुंजइ माणुस्सए सुहे, महाकच्छणामधेज्जे' इति ग्राह्यं, ईदृशेनाभिलापेनार्थो महाकच्छशब्दस्य भणितव्यः। सम्प्रति ब्रह्मकूटप्रश्नः—'कहि णं'मित्यादि, सर्वं व्यक्तं, ब्रह्मकूटनामा द्वितीयो वक्षस्कारः चित्रकूटातिदेशेन यावत्पदादायामसूत्रादिकं भूमिरमणीयसूत्रान्तं च सर्वं वाच्यम्। अथात्र कूटवक्तव्यतामाह—'ब्रह्मकूडे चत्तारि कूडा'इत्यादि, व्यक्तं, नवरं एवं चित्रकूटवक्षस्कारकूटन्यायेन वाच्यं, यावत्करणात् समा उत्तरदाहिणेणं परुप्परंतीत्यादि ग्राह्यं, अर्थो—ब्रह्मकूटशब्दार्थः, 'से केणट्ठेणं भन्ते! एवं वुच्चइ—ब्रह्मकूडे २' इत्यालापकेन उल्लेख्यः, ब्रह्मकूटनामा देवश्चात्र पल्योपमस्थितिकः परिवसति, तदेतेनार्थेनेति सुगमं। अथ चतुर्थविजयः—'कहि णं'मित्यादि, व्यक्तं, परं द्रहावत्याः अन्तरनद्याः पश्चिमायां कच्छगावतीविजयः कच्छा एव कच्छकाः—मालुकाकच्छादयः सन्त्यस्यामतिशायिन इति 'अनजिरे'ति सूत्रे (श्रीसि० अ०३पा०२सू०७८) शरादीनामाकृतिगणत्वेन सिद्धिः, शेषं प्राग्वत्, अथायमनन्तरोक्तो विजयो यस्याः पश्चिमायां तामन्तरनदीं लक्षयितुमाह—'कहि णं'मित्यादि, प्रश्नसूत्रं व्यक्तं,उत्तरसूत्रे आवर्त्तनाम्नः पूर्वदिग्वर्त्तिनो विजयस्य पश्चिमाया कच्छावत्या विजयस्य पूर्वस्यां यावद् द्रहावतीकुण्डं नाम कुण्डं प्रज्ञप्तं शेषं यथा ग्राहावतीकुण्डस्य स्वरूपाख्यानं ग्राहावतीद्वीपपरिमाणभवनवर्णकनामार्थकथनप्रमुखं तथा ज्ञेयं, नवरं द्रहावतीद्वीपो द्रहावतीदेवीभवनं द्रहावतीप्रभपद्मादियोगाद् द्रहावतीति नामार्थः समधिगम्यः, द्रहा—

नीलवतो दक्षिणस्यां शीताया उत्तरस्यां पौरस्त्यलवणसमुद्रस्य पश्चिमायां पुष्कलावतीचक्रवर्त्तिविजयस्य पूर्वस्यां अत्रान्तरे शीता मुखवनं नाम वनं प्रज्ञप्तम्, उत्तरदक्षिणायतेत्यादि विशेषणानि विजयवद्व्याख्येयानि, इह विजयवक्षस्कारगिर्यन्तरनद्यः सर्वत्र तुल्यविस्ताराः वनमुखानि तु निषधसमीपे नीलवत्समीपे चाल्पविष्कम्भानि शीताशीतोदोभयकूलपार्श्वे तु पृथुविष्कम्भानि जगत्यनुरोधात्, तथाहि—पूर्वस्यामपरस्यां च दिशि निषधान्नीलवतो वाऽऽरभ्य जगती वक्रगत्या शीतां शीतोदां वा प्राप्ता, जगतीसंस्पर्शवर्त्तीनि च मुखवनानि, ततस्तदनुरोधात् दर्शयति—शीतामुखवनखण्डे द्वे योजनसहस्रे नव च द्वाविंशत्यधिकानि योजनशतानि विष्कम्भेन, अत्रोपपत्तिः प्राग्वत्, विजयवक्षस्कारान्तर्नदीमेरुपृथुत्वपूर्वापरभद्रशालवनायामसीलने जातानि ९४१५६, अस्य राशेर्जम्बूद्वीपपरिमाणात् शोधने शेषं ५८४४, अस्य शीताशीतोदयोरेकस्मिन् दक्षिणे उत्तरे वा भागे द्वे मुखवने इति द्वाभ्यां भागे हृते आगतानि द्वाविंशत्यधिकान्येकोनत्रिंशद्योजनशतानि २९२२, अत्र च तेवीसे इति पाठोऽशुद्धः, एतच्च पृथुत्वपरिमाणं न सर्वत्र शीताशीतोदयोर्मुखप्रत्यासन्नत्वेनतत्करणावकाशादत्रैव महाविदेहवर्षस्य सर्वोत्कृष्टविस्तारलाभादित्याह—तदनन्तरं च मात्रया २—अंशेनांशेन परिहीयमानं २—हानिमुपगच्छद् नीलवद्वर्षधरपर्वतान्ते एकमेकोनविंशतिभागं योजनस्य विष्कम्भेन, एकां कलां यावत्पृथुत्वेनेत्यर्थः, 'कालाध्वनोर्व्याप्तौ'—(श्रीसिद्ध० अ० २ पा० २ सू० ४२) इत्यनेन द्वितीया, अत्र करणं—मुखवनानां सर्वलघुविष्कम्भो वर्षधरपार्श्वे ततो वर्षधरजीवात इदं करणं समुत्तिष्ठति, तथाहि—प्रस्तुते नीलवज्जीवा चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं योज-

नराशिः ४८४८१८२४, कलाद्वयमपि २९२२ अनेनैव गुण्यते जातः कलाराशिः ५८४४, ततो योजनराशौ ४८४८-१८२४ सवर्णिते जातं ९२११५४६५६ ततः कलाराशिः ५८४४ क्षेपे जातं ९२११६०५०० ततोऽस्य मुखवनायामेन १६५९२ सवर्णितेन कलाद्वययुक्तेन ३१५२५० भागे हृते लब्धं उष्टस्थाने २९२२ योजनरूपो विष्कम्भः, एवमन्यत्रापि भावनीयम् । अथास्य पद्मवरवेदिकादिवर्णनायाह—'से णं एगाए पउ०' इत्यादि, तन्मुखवनमेकया पद्मवरवेदिकया एकेन च वनखण्डेन समपरिक्षिप्तम् । अथ शीतामुखवनस्य वर्णको वाच्यः—'किण्हे किण्होभासे' इत्यादि, कः कियत्पर्यन्तमित्याह—यावद्देवता आसते शेरते इत्यादि, अत्र विजयदिशि पद्मवरवेदिका गोपिका लवणदिशि तु जगत्येव गोपिका इत्येका, इयं च पद्मवरवेदिका जगतीवन्मुखवनव्याम एवान्तर्लीना, यत्र तु वनव्यामः कलाप्रमाणस्तत्र विजयव्यासं रुणद्धीति तात्पर्यं, अन्यथा विजयादिभिर्जम्बूद्वीपस्य परिपूर्णलक्षपूर्त्तावुभयतो जगत्यादेः काव काशः स्यात्, अत एवाह—"अविवक्खिऊण जगइं सवेइवणमुहचउक्कपिंडुक्कं । गुणतीसमयबत्तीसं णईति गिरिअंति एगकला ॥ १ ॥" [ विवक्षित्वा जगतीं सवेदिकावनमुखचतुष्कपिण्डितं । एकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि नदीपार्श्वे गिरिपार्श्वे एका कला ॥ १ ॥] इति, अथोपसंहारमाह—'एवं उत्तरिल्लं' इत्यादि, एवं-विजयादिकथनेन उत्तरदिग्वर्त्ति पार्श्वं समाप्तम्, माप्यमिति शेषः, प्राक् चतुर्विभागतयोद्दिष्टस्य विदेहक्षेत्रस्य प्राच्योत्तरपार्श्वं विजयादिकथनापेक्षया पूर्णं निर्दिष्टमित्यर्थः । अथ प्रतिविजयमेकैका राजधानीं निर्दिशन्नाह—'विजया' इत्यादि, विजया भणिताः,

अत्र च भणितानामपि विजयानां यत्पुनर्भणनमुक्तं तद्राजधानीनिरूपणार्थं, राजधान्यश्चेमाः पद्यबन्धेन संगृह्णाति, कच्छविजयतः क्रमेण नामतो ज्ञेयाः, क्षेमा १ क्षेमपुरा २ अरिष्टा ३ अरिष्टपुरा ४ तथा खड्गी ५ मंजूषा ६ अपि चेति समुच्चये औषधी ७ पुंडरीकिणी ८ इति, एताः शीताया औदीच्यानां विजयानां दक्षिणार्द्धमध्यमखण्डेषु वेदितव्याः, अथैषु श्रेणिस्वरूपमाह—'सोलस विजाहरसेढीओ'इत्यादि, उक्तेष्वष्टसु विजयेषु षोडश विद्याधरश्रेणयो वाच्याः, प्रतिवैताढ्यं श्रेणिद्वयद्वयसम्भवात्, आसु च विद्याधरश्रेणिषु प्रत्येकं दक्षिणोत्तरपार्श्वयोः पञ्चपञ्चाशन्नगराणि वाच्यानि, उभयत्रापि वैताढ्यस्य समभूमिकत्वात्, तावत्यः आभियोग्यश्रेण्यो वाच्याः षोडश इत्यर्थः, सर्वाश्चेमा अभियोग्यश्रेणय ईशानेन्द्रस्य मेरुतः उत्तरदिग्वर्त्तित्वात्, अत्र च विद्याधरश्रेणिसूत्रं आदर्शान्तरेष्वदृष्टमपि प्रस्तावादाभियोग्यश्रेणिसङ्गत्यनुपपत्तेश्च प्राकृतशैल्या संस्कृत्य मया लिखितमस्तीति बहुश्रुतैर्मयि सूत्राशातना न चिन्तनीयेति, उत्तरत्रापि सूत्रकारेण संग्रहगाथायामाभियोग्यश्रेणिसंग्रहो विद्याधरश्रेणिसंग्रहपूर्वकमेव वक्ष्यते। अथ शेषविजयवक्षस्कारादीनां स्वरूपप्ररूपणाय लाघवाशयेनातिदेशसूत्रमाह—'सव्वेसु'इत्यादि, सर्वेषु विजयेषु कच्छवक्तव्यता ज्ञेया, यावदर्थो—विजयानां नाम निरुक्तं, तथा विजयेषु विजयसदृशनामका राजानो ज्ञेयाः, तथा षोडशवक्षस्कारपर्वतानां चित्रकूटवक्तव्यता ज्ञेया यावच्चत्वारि २ कूटानि व्यावर्णितानि भवन्ति, तथा द्वादशानां नदीनां—अन्तरनदीनामित्यर्थः

ग्राहावतीवक्तव्यता ज्ञेया यावदुभयोः पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां वनखण्डाभ्यां च सम्परिक्षिप्ता वर्णकश्चेति । अथ द्वितीयं विदेहविभागं निर्देष्टुमाह—

कहि णं भन्ते ! जम्बुद्दीवे दीवे महाविदेहे वासे सीआए महाणईए दाहिणिल्ले सीयामुहवणे णामं वणे पण्णत्ते ?, एवं जह चेव उत्तरिल्लं सीआमुहवणं तह चेव दाहिणंपि भाणिअव्वं, णवरं णिसहस्स वासहरपव्वयस्स उत्तरेणं सीआए महाणईए दाहिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं वच्छस्स विजयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे सीआए महाणईए दाहिणिल्ले सीआमुहवणे णामं वणे पं० उत्तरदाहिणायए तहेव सव्वं णवरं णिसहवासहरपव्वयंतेणं एगमेगूणवीसइभागं जोअणस्स विक्खम्भेणं किण्हे किण्होभासे जाव महया गन्धद्धाणिं मुअन्ते जाव आसयन्ति उभओ पासिं दोहिं पउमवरवेइआहिं वणवण्णओ इति । कहि णं भन्ते ! जम्बुद्दीवे दीवे महाविदेहे वासे वच्छे णामं विजए पण्णत्ते ?, गोअमा ! णिसहस्स वासहरपव्वयस्स उत्तरेणं सीआए महाणईए दाहिणेणं दाहिणिल्लस्स सीआमुहवणस्स पच्चत्थिमेणं तिउडस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे वच्छे णामं विजए पण्णत्ते तं चेव पमाणं सुसीमा रायहाणी १, तिउडे वक्खारपव्वए सुवच्छे विजए कुण्डला रायहाणी २, तत्तजला णई महावच्छे विजए अपराजिआ रायहाणी ३, वेसमणकूडे वक्खारपव्वए वच्छावई विजए पभंकरा रायहाणी ४, मत्तजला णई रम्मे विजए अंकावई रायहाणी ५, अंजणे वक्खारपव्वए रम्मगे विजए पम्हावई, रायहाणी ६, उम्मत्तजला महाणई रमणिज्जे विजए सुभा रायहाणी ७, मायंजणे वक्खारपव्वए मंगलावई विजए रय-

णसचया रायहाणीति ८, एव जह चेव सीआए महाणईए उत्तर पास तह चेव दक्खिणिल्ल भाणिअव्वं, दाहिणिल्लसीआमुहवणाइ, इमे वक्खारकूडा तं०—तिउडे १ वेसमणकूडे २ अंजणे ३ मायजणे ४, [ णईउ तत्तजला १ मत्तजला २ उम्मत्तजला ३, ] विजया त०—वच्छे सुवच्छे महावच्छे चउत्थे वच्छगावई । रम्मे रम्मए चेव, रमणिज्जे मगलावई ॥ १ ॥ रायहाणीओ, तंजहा—सुसीमा कुण्डला चेव, अवराइअ पहंकरा । अकावई पम्हावई सुभा रयणसचया ॥ २ ॥ वच्छस्स विजयस्स णिसहे दाहिणेण सीआ उत्तरेण दाहिणिल्लसीदामुहवणे पुरत्थिमेण तिउडे पच्चत्थिमेण सुसीमा रायहाणी पमाणं त चेवेति, वच्छाणतर तिउडे तओ सुवच्छे विजए एएण कमेण तत्तजला णई महावच्छे विजए वेसमणकूडे वक्खारपव्वए वच्छावई विजए मत्तजला णई रम्मे विजए अंजणे वक्खारपव्वए रम्मए विजए उम्मत्तजला णई रमणिज्जे विजए मायजणे वक्खारपव्वए मगलावई विजए (सूत्रं९६)

'कहि ण'मित्यादि, क भदन्त ! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे शीतामहानद्या दाक्षिणात्यं शीतामुखवनं शीतानिषधमध्यवर्त्तीत्यर्थः अतिदेशसूत्रत्वेनोत्तरसूत्रं स्वयं भाव्यं, परं वच्छस्य विजयस्य—विदेहद्वितीयभागाद्यविजयस्य पूर्ववत इति । अथ द्वितीये महाविदेहविभागे विजयादिव्यवस्थामाह—'कहि ण'मित्यादि, प्रश्नः सुलभः, उत्तरसूत्रे निषधस्य वर्षधरपर्वतस्योत्तरस्यां शीताया महानद्या दक्षिणस्यां दाक्षिणात्यस्य शीतामुखवनस्य पश्चिमतः त्रिकूटस्य वक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे महाविदेहे वर्षे वत्सो विजयः प्रज्ञप्तः, सुसीमा राजधानी विजयविभाजकश्च त्रिकूटनामा वक्षस्कारपर्वतः १ सुवच्छो विजयः कुण्डला राजधानी तप्तजलाऽन्तरनदी २ महावत्सो विजयः अपराजिता

राजधानी वैश्रमणकूटो माम वक्षस्काराद्रिः ३, वत्सावती विजयः प्रभङ्करा राजधानी मत्तजला नदी ४, रम्यो विजयः अङ्कावती राजधानी अञ्जनो वक्षस्कारः ५, रम्यको विजयः पक्ष्मावती राजपूः उन्मत्तजला महानदी ६ रमणीयो विजयः शुभा राजपूःमातञ्जनो वक्षस्काराद्रिः ७, मङ्गलावती विजयः रत्नसञ्चया नगरी ८, सुलभसूत्रे शब्दसंस्कार एव विवरणमिति, इमाश्च राजधान्यः शीतादक्षिणदिग्भाविराजधानीत्वेन विजयानामुत्तरार्द्धमध्यमखण्डेषु ज्ञेयाः, अथ विजयादीनां व्यासादिसाम्ये दर्शितेऽपि केनचित्प्रकारेण न पार्श्वयोः परस्परं भेदो भविष्यतीत्याशङ्कानिवृत्त्यर्थमाह— 'एवं जह'इत्यादि, एवं–प्रागुक्तप्रकारेण यथैव शीताया महानद्या उत्तरं पार्श्वं प्राच्यमिति शेषः तथैव दाक्षिणात्यं पार्श्वमिति शेषः भणितव्यं, अत्र विशेषणद्वारेण संग्रहमाह, किंविशिष्टमिदं पार्श्वम्?—दाक्षिणात्यशीतामुखवनमादौ यत्र तद् दाक्षिणात्यशीतामुखवनादि, अनेन यथा प्रथमविभागस्य कच्छविजय आदिरुक्तस्तथा द्वितीयविभागस्य दाक्षिणात्यशीतामुखवनमादिरुक्तमिति, तथा इमे वक्ष्यमाणा वक्षस्कारकूटाः, कूटशब्देनात्र कूटान्येषां सन्तीत्यभ्रादित्वादप्रत्यये कूटाः–पर्वताः, तद्यथा–त्रिकूटेत्यादि, विजयानां राजधानीनां च संग्रहाय पद्यमेकैकं, इमानि च संग्रहसूत्राणि सुखप्रतिपत्तिहेतुभूतानीति न पुनरुक्तिर्विभाव्या, अथ पूर्वसूत्राल्लब्धेऽपि वत्सविजयदिग्नियमे विचित्रत्वात् सूत्रप्रवृत्ते रीत्यन्तरमाह—'वच्छस्स'इत्यादि, वत्सस्य विजयस्य निषधो दक्षिणेन तथा तस्यैव शीता उत्तरेणेत्यादि स्पष्टं, न चैवं निषधादयो लक्ष्याः लक्षणं वत्सविजय इति वाच्यं, लक्ष्यलक्षणभावस्य कामचारात्, प्रस्तुते च प्रकरणबलात्

वत्स एव लक्ष्यत इति, सुसीमा राजधानी प्रमाणं तदेव–अयोध्यासम्बन्ध्येव, प्रमाणाभिधानाय राजधान्याः पुनरुपन्यासेन न पुनरुक्तिदोषः, अथैषां विजयादीनां स्थानक्रमदर्शनायाह—'वच्छाण'मित्यादि, सुगमं, नवरं वत्सानन्तरं त्रिकूटः पश्चिमत इति बोध्यं, अन्यथा पूर्वतो दाक्षिणात्यशीतामुखवनस्य प्रतिपत्तिः स्यादित्युक्तो द्वितीयो विदेहविभागः। अथ क्रमायातं गजदन्तगिरिं सौमनसाख्यं लक्षयितुमाह—

कहि ण भन्ते! जम्बुद्दीवे दीवे महाविदेहे वासे सोमणसे णाम वक्खारपव्वए पण्णत्ते?, गो० णिसहस्स वासहरपव्वयस्स उत्तरेण मन्दरस्स पव्वयस्स दाहिणपुरत्थिमेणं मंगलावईविजयस्स पच्चत्थिमेण देवकुराए पुरत्थिमेण एत्थ ण जम्बुद्दीवे २ महाविदेहे वासे सोमणसे णाम वक्खारपव्वए पण्णत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे जहा मालवन्ते वक्खारपव्वए तहा णवरं सव्वरययामए अच्छे जाव पडिरूवे, णिसहवासहरपव्वयतेण चत्तारि जोअणसयाइं उद्धं उच्चत्तेण चत्तारि गाऊअसयाइं उव्वेहेण सेसं तहेव सव्वं णवरं अट्ठो से गोअमा! सोमणसे णं वक्खारपव्वए बहवे देवा य देवीओ अ सोमा सुमणा सोमणसे अ इत्थ देवे महिद्धीए जाव परिवसइ से एएणट्ठेण गोअमा! जाव णिच्चे। सोमणसे वक्खारपव्वए कइ कूडा प०?, गो०! सत्त कूडा प०, तं०–सिद्धे १ सोमणसे २ विअ बोद्धव्वे मंगलावईकूडे ३। देवकुरु ४ विमल ५ कंचण ६ वसिट्ठकूडे ७ अ बोद्धव्वे ॥ १ ॥ एवं सव्वे पञ्चसइआ कूडा, एएसिं पुच्छा दिसिविदिसाए भाणिअव्वा जहा गन्धमायणस्स, विमलकञ्चणकूडेसु णवरिं देवयाओ सुवच्छा वच्छमित्ता य अवसिट्ठेसु कूडेसु सरिसणामया देवा रायहाणीओ दक्खिणेणंति। कहि ण भन्ते! महाविदेहे

वासे देवकुराणामं कुरा पण्णत्ता ?, गोअमा! मन्दरस्स पव्वयस्स दाहिणेणं णिसहस्स वासहरपव्वयस्स उत्तरेणं विज्जुप्पहस्स वक्खारपव्वयस्स पुरत्थिमेण सोमणसवक्खारपव्वयस्स पच्चत्थिमेण एत्थ णं महाविदेहे वासे देवकुराणाम कुरा पण्णत्ता पाईणपडीणायया उदीणदाहिणविच्छिण्णा इक्कारस जोअणसहस्साइं अट्ठ य बायाले जोअणसए दुण्णि अ एगूणवीसइभाए जोअणस्स विक्खम्भेणं जहा उत्तरकुराए वत्तव्वया जाव अणुसज्जमाणा पम्हगन्धा मिअगन्धा अममा सहा तेतली सणिचारीति ६। (सूत्र९७)

कहि णं भन्ते! देवकुराए चित्तविचित्तकूडाणाम दुवे पव्वया प० ?, गो०!, णिसहस्स वासहरपव्वयस्स उत्तरिल्लाओ चरिमंताओ अट्ठचोत्तीसे जोअणसए चत्तारि अ सत्तभाए जोअणस्स अबाहाए सीओआए महाणईए पुरत्थिमपच्चत्थिमेण उभओकूले एत्थ णं चित्तविचित्तकूडा णाम दुवे पव्वया प०, एवं जच्चेव जमगपव्वयाण सच्चेव, एएसिं रायहाणीओ दक्खिणेणंति (सूत्र९८)। कहि णं भन्ते! देवकुराए २ णिसढद्दहे णाम दहे पण्णत्ते ?, गो०! तेसिं चित्तविचित्तकूडाणं पव्वयाणं उत्तरिल्लाओ चरिमन्ताओ अट्ठचोत्तीसे जोअणसए चत्तारि अ सत्तभाए जोअणस्स अबाहाए सीओआए महाणईए बहुमज्झदेसभाए एत्थ णं णिसहद्दहे णामं दहे पण्णत्ते, एवं जच्चेव नीलवंतउत्तरकुरुचन्देरावयमालवंताण वत्तया सच्चेव णिसहदेवकुरुसूरसुलसविज्जुप्पभाणं णेअव्वा, रायहाणीओ दक्खिणेणत्ति। ( सूत्र ९९ )

'कहि ण'मित्यादि, क्व भदन्तेत्यादिप्रश्नः सुलभः, उत्तरसूत्रे निषधस्य वर्षधरपर्वतस्य उत्तरस्यां मन्दरस्य पर्वतस्य पूर्वदक्षिणस्यां—आग्नेयकोणे मङ्गलावतीविजयस्य पश्चिमायां देवकुरूणां पूर्वस्यां यावत् सौमनसो वक्षस्कारपर्वतः प्रज्ञप्तः

इत्यादि सर्व माल्यवद्गजदन्तानुसारेण भाव्यं, यत्तु सप्रपञ्चं प्रथमं व्याख्याते गन्धमादनेऽतिदेशयितव्ये माल्यवतोऽतिदेशनं तदस्यासन्नवर्त्तित्वेन सूत्रकारशैलीवैचित्र्यज्ञापनार्थं, नवरं सर्वात्मना रजतमयोऽयं माल्यवांस्तु नीलमणिमयः, अयं च निषधवर्षधरपर्वतान्ते चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतिशतान्युद्वेधेन माल्यवांस्तु नीलवत्समीपे इति विशेषः, अर्थे च विशेषमाह—'से केणट्ठेण'मित्यादि, प्राग्वत्, भगवानाह—गौतम ! सौमनसवक्षस्कारपर्वते बहवो देवा देव्यश्च सौम्याः कायकुचेष्टाया अभावात् सुमनसो—मनःकालुष्याभावात् परिवसन्ति, ततः सुमनसामयमावास इति सौमनसः, सौमनसनामा चात्र देवो महर्द्धिकः परिवसति तेन तद्योगात् सौमनस इति, 'से एएणट्ठेण'मित्यादि, प्राग्वत्, 'सौमनसे' इति प्रायः सूत्रं व्यक्तं, नवरमेषा कूटानां पृच्छेति—प्रश्नसूत्ररूपा दिशि विदिशि च भणितव्या, 'कहि णं भन्ते ! सोमणसे वक्खारपव्वए सिद्धाययणकूडे णामं कूडे पण्णत्ते'इत्यादिरूपा, यथा गन्धमादनस्य—प्रथमवक्षस्कारगिरेः सप्तानां कूटानां दिग्विदिग्वक्तव्यता तथाऽत्रापि, अत्र चामन्नत्वेन प्रागतिदेशितोऽपि माल्यवान्नवकूटाश्रयत्वेन कूटाधिकारे उपेक्षित इति, कूटानां दिग्विदिग्वक्तव्यता यथा—मेरोः प्रत्यासन्नं दक्षिणपूर्वस्यां दिशि सिद्धायतनकूटं तस्य दक्षिणपूर्वस्या दिशि द्वितीयं सौमनसकूटं, तस्यापि दक्षिणपूर्वस्यां दिशि तृतीयं मङ्गलावतीकूटं, इमानि त्रीणि कूटानि विदिग्भावीनि मङ्गलावतीकूटस्य दक्षिणपूर्वस्यां पञ्चमविमलकूटस्योत्तरस्यां चतुर्थं देवकुरुकूटं, तस्य दक्षिणतः पञ्चमं विमलकूटं, तस्यापि दक्षिणतः षष्ठं काञ्चनकूटं, अस्यापि च

जनप्रमाणविस्तारस्य हैमवतस्य मध्यवर्त्ती योजनसहस्रमान एष गिरिः कथं क्षेत्रं द्विधा विभजति?, उच्यते, प्रस्तुतक्षेत्रव्यासो हि उभयोः पार्श्वयोः रोहितारोहिताशाभ्यां नदीभ्यां रुद्धः मध्यतस्त्वनेन, अथ नदीरुद्धक्षेत्रं वर्जयित्वाऽवशिष्टक्षेत्रमसौ द्विधा करोतीत्यस्मिन्नन्वर्थवती वैताढ्यशब्दप्रवृत्तिरिति, एवं शेषेष्वपि वृत्तवैताढ्येषु स्वस्वक्षेत्रस्वस्वनदीनामभिलापेन भाव्यं, दिग्विभागनियमनं सुलभमिति न व्याख्यायते, एकं योजनसहस्रमूर्ध्वोच्चत्वेन अर्द्धतृतीयानि योजनशतान्युद्वेधेन सर्वत्र समः—तुल्योऽधोमध्योर्ध्वदेशेषु सहस्रसहस्रविस्तारकत्वात्, अत एव पल्यङ्कसंस्थानसंस्थितः, पल्यङ्कश्च—ललाटदेशप्रसिद्धो वंशदलेन निर्मापितो धान्याधारकोष्ठकः, एकं योजनसहस्रमायामविष्कम्भाभ्यां त्रीणि योजनसहस्राणि एकं च द्वाषष्ट्यधिकं योजनशतं किञ्चिद्विशेषेण करणवशादागतेन सूत्रानिर्दिष्टेन राशिना अधिकं परिक्षेपेण प्रज्ञप्तं, सर्वात्मना रत्नमयः, केचन रजतमयान् वृत्तवैताढ्यानाहुः परं तेषामनेन ग्रन्थेन सह विरुद्धत्वमिति । अथात्र पद्मवरवेदिकाद्याह—'से ण'मित्यादि, व्यक्तं, 'सद्दावइस्स ण'मित्यादि, व्यक्तं ॥ अथ नामार्थं निरूपयन्नाह—'से केणट्ठेणं भन्ते!'इत्यादि, प्रागुक्तऋषभकूटप्रकरणवद् व्याख्येयं, नवरं ऋषभकूटप्रकरणे ऋषभकूटप्रभैः ऋषभकूटवर्णैरुत्पलादिभिर्ऋषभकूटनामनिरुक्तिर्दर्शिता अत्र तु शब्दापातिप्रभैः शब्दापातिवर्णैः उत्पलादिभिः शब्दापातिवृत्तवैताढ्यनामनिरुक्तिर्द्रष्टव्या, शब्दापाती चात्र देवो महर्द्धिको यावन्महानुभावः पल्योपमस्थितिकः परिवसति, अथ शब्दापातिदेवमेव विशिनष्टि—'से णं तत्थ'इत्यादि, स—शब्दापाती देवस्तत्र—प्रस्तुतगिरौ चतुर्णां सामानिकसहस्राणा

य एगूणवीसइभाए जोअणस्स उत्तराभिमुही पव्वएण गता महया घडमुहपवत्तिएण मुत्तावलिहारसंठिएण साइरेगदुजोअणसइएणं पवाएण पवडइ, हरिकंता महाणई जओ पवडइ एत्थ णं महं एगा जिब्भिआ पं० दो जोअणाइं आयामेणं पणवीसं जोअणाइं विक्खंभेणं अद्धं जोअणं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्वरयणामई अच्छा, हरिकंता णं महाणई जहिं पवडइ एत्थ णं महं एगे हरिकंतप्पवायकुंडे णामं कुंडे पण्णत्ते दोण्णि अ चत्ताले जोअणसए आयामविक्खंभेणं सत्तअउणट्ठे जोयणसए परिक्खेवेणं अच्छे एवं कुण्डवत्तव्वया सव्वा नेयव्वा जाव तोरणा, तस्स णं हरिकंतप्पवायकुण्डस्स बहुमज्झदेसभाए एत्थ णं महं एगे हरिकंतदीवे णामं दीवे प० बत्तीसं जोअणाइं आयामविक्खंभेणं एगुत्तरं जोअणसयं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्वरयणामए अच्छे, से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं जाव सपरिक्खित्ते वण्णओ भाणिअव्वोत्ति, पमाणं च सयणिज्जं च अट्ठो अ भाणिअव्वो। तस्स णं हरिकंतप्पवायकुण्डस्स उत्तरिल्लेणं तोरणेणं जाव पवूढा समाणी हरिवस्सं वासं एज्जेमाणी २ विअडावइं वट्टवेअड्ढं जोअणेणं असंपत्ता पच्चत्थाभिमुही आवत्ता समाणी हरिवासं दुहा विभयमाणी २ छप्पण्णाए सलिलासहस्सेहिं समग्गा अहे जगइं दलइत्ता पच्चत्थिमेणं लवणसमुद्दं समप्पेइ, हरिकंता णं महाणई पवहे पणवीसं जोअणाइं विक्खम्भेणं अद्धजोअणं उव्वेहेणं तयणंतरं च णं मायाए २ परिवड्ढमाणी २ मुहमूले अड्ढाइज्जाइं जोअणसयाइं विक्खम्भेणं पञ्च जोअणाइं उव्वेहेणं, उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वणसंडेहिं संपरिक्खित्ता ( सूत्र ८० )

'महाहि'इत्यादि प्रायः पद्मद्रहसूत्रानुसारेण व्याख्येयं। अथैतद्दक्षिणद्वारनिर्गतां नदीं निर्दिशन्नाह—'तस्स णं'मि-

हेम–प्रकाशयति, ततो हेम नित्ययोगि प्रशस्यं वाऽस्यास्तीति हेमवत् हेमवदेव हैमवतम्, प्रज्ञादेराकृतिगणतया 'प्रज्ञादिभ्यः' (श्रीसिद्ध० अ० ७–पा० २ सू० १६५) इति स्वार्थेऽण् प्रत्ययः, हैमवतश्चात्र देवो महर्द्धिकः पल्योपमस्थितिकः परिवसति, तेन तद्योगाद्धैमवतमिति व्यपदिश्यते, हैमवतो देवः स्वामित्वेनास्यास्तीत्यभ्रादित्वादप्रत्यये वा ॥

अथास्यैवोत्तरतः सीमाकारी यो वर्षधरगिरिस्तं विवक्षुराह—

कहि ण भन्ते ! जम्बुद्दीवे २ महाहिमवन्ते णामं वासहरपव्वए प०?, गो० ! हरिवासस्स दाहिणेण हेमवयस्स वासस्स उत्तरेण पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेण, एत्थ ण जम्बुद्दीवे दीवे महाहिमवते णामं वासहरपव्वए पण्णत्ते, पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलियकसठाणसठिए दुहा लवणसमुद्द पुट्ठे पुरत्थिमिल्लाए कोडीए जाव पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्ल लवणसमुद्दं पुट्ठे दो जोअणसयाइ उद्ध उच्चत्तेण पण्णास जोअणाइं उव्वेहेणं चत्तारि जोअणसहस्साइं दोण्णि अ दसुत्तरे जोअणसए दस य एगूणवीसइभाए जोअणस्स विक्खम्भेण, तस्स बाहा पुरत्थिमपच्चत्थिमेणं णव जोअणसहस्साइ दोण्णि अ छावत्तरे जोअणसए णव य एगूणवीसइभाए जोअणस्स अद्धभाग च आयामेण, तस्स जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्द पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्ल लवणसमुद्दं पुट्ठा पच्चत्थिमिल्लाए जाव पुट्ठा तेवण्ण जोअणसहस्साइं नव य एगतीसे जोअणसए छच्च एगूणवीसइभाए जोअणस्स किंचिविसेसाहिए आयामेणं, तस्स धणुं दाहिणेणं सत्तावण्ण जोअणसहस्साइं दोण्णि अ तेणउए जोअणसए दस य एगूणवीसइभाए जोअणस्स परिक्खेवेणं, रुअगसठाणसठिए सव्वरय-

उमद्दहस्स दक्खिणिल्लेण तोरणेण रोहिआ महाणई पवूढा समाणी सोलस पंचुत्तरे जोअणसए पंच य एगूणवीसइभाए जोअणस्स दाहिणाभिमुही पवएण गता मह्या वडमुहपवित्तिएण मुत्तावलिहारसठिएण साइरेगदोजोअणसइएण पवाएण पवडइ, रोहिआ ण महाणई जओ पवडइ एत्थ ण मह एगा जिब्भिया प०, सा ण जिब्भिआ जोअण आयामेण अद्धतेरसजोअणाइ विक्खभेण कोस बाहल्लेण मगरमुहविउट्ठसठाणसठिआ सव्ववइरामई अच्छा, रोहिआ णं महाणई जहिं पवडइ एत्थ ण मह एगे रोहिअप्पवायकुंडे णाम कुंडे प० सवीस जोअणसय आयामविक्खभेणं पण्णत्त तिण्णि असीए जोअणसए किंचिविसेसूणे परिक्खेवेण दस जोअणाइ उव्वेहेणं अच्छे सण्हे सो चेव वण्णओ, वइरतले वट्टे समतीरे जाव तोरणा, तस्स ण रोहिअप्पवायकुण्डस्स बहुमज्झदेसभाए एत्थ ण मह एगे रोहिअदीवे णाम दीवे पण्णत्ते, सोलस जोअणाइ आयामविक्खभेण साइरेगाइं पण्णास जोअणाइं परिक्खेवेण दो कोसे ऊसिए जलताओ सव्ववइरामए अच्छे, से ण एगाए पउमवरवेइआए एगेण य वणसडेण सव्वओ समता सपरिक्खित्ते, रोहिअदीवस्स णं दीवस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते, तस्स ण बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ ण मह एगे भवणे पण्णत्ते, कोस आयामेणं सेस त चेव पमाण च अट्ठो अ भाणिअव्वो। तस्स णं रोहिअप्पवायकुण्डस्स दक्खिणिल्लेण तोरणेणं रोहिआ महाणई पवूढा समाणी हेमवय वास एज्जेमाणी २ सद्दावइ वट्टवेअद्धपव्वय अद्धजोअणेण असपत्ता पुरत्थाभिमुही आवत्ता समाणी हेमवय वास दुहा विभयमाणी २ अट्ठावीसाए सलिलासहस्सेहिं समग्गा अहे जगइं दालइत्ता पुरत्थिमेण लवणसमुद्दं समप्पेइ रोहिआ णं जहा रोहिअसा तहा पवाहे अ मुहे अ भाणिअव्वा इति जाव सपरिक्खित्ता। तस्स ण महापउमद्दहस्स उत्तरिल्लेण तोरणेण हरिकंता महाणई पवूढा समाणी सोलस पचुत्तरे जोअणसए पंच

त्यादि, तस्य महापद्मद्रहस्य दाक्षिणात्येन तोरणेन रोहिता महानदी प्रव्यूढा—निर्गता सती षोडश पञ्चोत्तराणि योजनशतानि पञ्च चैकोनविंशतिभागान् योजनस्य दक्षिणाभिमुखी पर्वतेन गत्वा महता घटमुखप्रवृत्तिकेन मुक्तावलिहारसंस्थितेन सातिरेकद्वियोजनशतिकेन, सातिरेकत्वं च रोहिताप्रपातकुण्डोद्वेधापेक्षया बोध्यं, प्रपातेन प्रपतति, षोडशेत्यादिसङ्ख्यानयनं तु चतुःसहस्रद्विशतदशयोजनतदेकोनविंशतिभागात्मक [भागदश] काद्गिरिव्यासात् सहस्रयोजनात्मके द्रहव्यासेऽपनीते सत्यर्द्धीकृताद्भवति, अन्यत् सर्वं रोहितांशागमेन वाच्यं, अथ सा यतः प्रपतति तदास्पदं दर्शयति—'रोहिआ ण'मित्यादि, प्राग्वत्,अथ यत्र प्रपतति तदाह—'रोहिआ ण'मित्यादि,प्राग्व्याख्यातप्रायं, नवरं सविंशतिकं योजनशतं गङ्गाप्रपातकुण्डतो द्विगुणायामविष्कम्भत्वात्, त्रीणि योजनशतानि अशीत्यधिकानि किञ्चिद्विशेषोनानि, ऊनत्वं करणेन यो० ३७९ क्रोशः १ कियद्धनुरधिकस्तेन किञ्चिदूनाऽशीतिरुक्ता इत्यर्थः, परिक्षेपेणेति । अधुनाऽस्य द्वीपवक्तव्यमाह—'तस्स ण'मित्यादि व्यक्तं, नवरं गङ्गाद्वीपतो द्विगुणायामविष्कम्भत्वात् षोडश योजनानि रोहिताद्वीपप्रमाणमित्यर्थः,'से ण'मित्यादि, सुगमं,'रोहिअदीव'इत्यादि, सुगमं, नवरं शेषं विष्कम्भादिकं प्रमाणं तदेव, कोऽर्थः ?—अर्द्धक्रोशं विष्कम्भेन देशोनक्रोशमुच्चत्वेनेति, चशब्दाद्रोहितादेवीशयनादिवर्णकोऽपि, अर्थश्च 'से केणट्ठेणं भन्ते ! रोहिअदीवे'इत्यादि, सूत्रावगम्यः, सम्प्रति यथेयं लवणगामिनी तथाऽऽह—'तस्से'त्यादि, तस्य—रोहिताप्रपातकुण्डस्य दाक्षिणात्येन तोरणेन द्वारेणेत्यर्थः रोहिता महानदी प्रव्यूढा—निर्गता सती हैमवतं वर्षं आगच्छन्ती २ हैमवतक्षेत्राभि-

वृद्ध्या, प्रतिपार्श्वं धनुर्विंशतिवृद्ध्येत्यर्थः, परिवर्द्धमाना २ मुखमूले–समुद्रप्रवेशेऽर्द्धतृतीयानि योजनशतानि विष्कम्भेन पञ्चयोजनान्युद्वेधेन, उभयोः पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां च वनखण्डाभ्यां सम्परिक्षिप्ता ॥ अथैतस्य कूटवक्तव्यमाह—

महाहिमवन्ते णं भन्ते! वासहरपव्वए कइ कूडा पं० ?, गो०! अट्ठ कूडा प०, तं०—सिद्धायणकूडे १ महाहिमवन्तकूडे २ हेमवयकूडे ३ रोहिअकूडे ४ हिरिकूडे ५ हरिकंतकूडे ६ हरिवासकूडे ७ वेरुलिअकूडे ८, एव चुल्लहिमवंतकूडाणं जा चेव वत्तव्वया सच्चेव णेअव्वा, से केणट्ठेणं भन्ते! एव वुच्चइ महाहिमवते वासहरपव्वए २ ?, गोअमा! महाहिमवते ण वासहरपव्वए चुल्लहिमवंतं वासहरपव्वय पणिहाय आयामुच्चत्तुव्वेहविक्खम्भपरिक्खेवेण महततराए चेव दीहतराए चेव, महाहिमवते अ इत्थ देवे महिद्धीए जाव पलिओवमट्ठिइए परिवसइ ( सूत्र ८१ )

'महाहिमवन्ते'त्ति, महाहिमवति वर्षधरपर्वते भगवन्! कति कूटानि?, गौतमेत्यादि सूत्रं सुगमं, कूटानां नामार्थस्त्वयं–सिद्धायतनकूटं महाहिमवदधिष्ठातृकूटं हैमवतपतिकूटं रोहितानदीसुरीकूटं ह्रीसुरीकूटं हरिकान्तानदीसुरीकूटं हरिवर्षपतिकूटं वैडूर्यकूटं तु तद्रत्नमयत्वात् तत्स्वामिकत्वाच्चेति, 'एव'मिति कूटानामुच्चत्वादि सिद्धायतनप्रासादानां च मानादि तत्स्वामिनां च यथारूपं महर्द्धिकत्वं यत्र च राजधान्यस्तत्सर्वं अत्रापि वाच्यं, केवलं नामविपर्यास एव देवानां तद्राजधानीनां चेति। साम्प्रतं महाहिमवतो नामार्थं निरूपयन्नाह—'से केणट्ठेण'मित्यादि, व्यक्तं नवरमुत्त-

वासे वासे विअडावई णाम वट्टवेअद्धपव्वए पण्णत्ते?, गो०! हरीए महाणईए पचत्थिमेणं हरिकंताए महाणईए पुरत्थिमेणं हरिवासस्स २ बहुमज्झदेसभाए एत्थ णं विअडावई णाम वट्टवेअद्धपव्वए पण्णत्ते, एव जो चेव सद्दावइस्स विक्खंभुच्चत्तुव्वेहपरिक्खेवसठाण वण्णावासो अ सो चेव विअडावइस्सवि भाणिअव्वो, णवरं अरुणो देवो पउमाइं जाव विअडावइवण्णाभाइ अरुणे अ इत्थ देवे महिद्धीए एव जाव दाहिणेण रायहाणी णेअव्वा, से केणट्ठेण भन्ते! एव वुच्चइ–हरिवासे हरिवासे?, गोअमा! हरिवासे ण वासे मणुआ अरुणा अरुणो भासा सेआ ण सखदलसण्णिकासा हरिवासे अ इत्थ देवे महिद्धीए जाव पलिओवमट्ठिईए परिवसइ, से तेणट्ठेण गोअमा! एव वुच्चइ (सूत्र ८२)

'कहि णं भन्ते! जम्बुद्दीवे २' इत्यादि, व्यक्तं, नवरं अष्टौ योजनसहस्राणि चत्वारि च योजनशतानि एकविंशत्यधिकानि एकं चैकोनविंशतितमं भागं योजनस्य विष्कम्भेन, महाहिमवतो द्विगुणविष्कम्भकत्वादिति। अधुनाऽस्य बाहादित्रयमाह–"तस्स बाहा'इत्यादि, 'तस्स जीवा'इत्यादि, 'तस्स धणु'मित्यादि, सूत्रत्रयमपि व्यक्तं॥ अथास्य स्वरूपं पिपृच्छिषुराह—'हरिवास'इत्यादि, हरिवर्षस्य वर्षस्य भगवन्! कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः?, गौतम! बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, अत्रातिदेशवाक्यमाह–यावन्मणिभिस्तृणैश्चोपशोभितः, एवं मणीनां तृणानां च वर्णो गन्धः स्पर्शः शब्दश्च भणितव्यः, पद्मवरवेदिकानुसारेणेत्यर्थः, अत्र जलाशयस्वरूपं निरूपयन्नाह–'हरिवासे ण'मित्यादि, क्षेत्रस्य सरसत्वेन तत्र तत्र देशप्रदेशेषु क्षुद्रिकादयो जलाशया अखाता एव सन्तीत्यर्थः, 'अत्रैकदे-

ग्रग्रहणेन सर्वोऽपि वाप्यादिजलाशयाश्रयको ग्राह्यः, अत्र कालनिर्णयार्थमाह—'एगं जो सुसमाए' इत्यादि, एवं—उक्तप्रकारेण वर्ण्यमाने तस्मिन् क्षेत्रे यः सुषमायाः—अवसर्पिणीद्वितीयारकस्यानुभावः न एतावन्मात्रः—सम्पूर्णो वक्तव्यः, सुषमाप्रतिभागनामकावस्थितकालस्य तत्र सम्भवात् ॥ अथास्य क्षेत्रस्य विभाजकगिरिमाह—'कहि णं' इत्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे हरितो—हरिसलिलाया महानद्याः पश्चिमाया हरिकान्ताया महानद्याः पूर्वस्यां हरिवर्षस्य २ बहुमध्यदेशभागे अत्रान्तरे विकटापातिनामा वृत्तवैताढ्यपर्वतः प्रज्ञप्तः, अत्र निगमयंस्तावदर्थमतिदेशसूत्रमाह—एवं विकटापातिवृत्तवैताढ्यवर्णने क्रियमाणे य एव शब्दापातिनो विष्कम्भोच्चत्वोद्वेधपरिक्षेपसंस्थानानां वर्णव्यासो—वर्णकग्रन्थविस्तरः चकारात्तत्रत्यप्रासादतत्स्वामिराजधान्यादिसंग्रहः, विकटापातिप्रभाणि विकटापातिवर्णाभानि च तेन विकटापातीति नाम, अरुणश्चात्र देव आधिपत्यं परिपालयति तेन तद्योगादपि तथा नाम प्रसिद्धम्, आह—विसदृशनामकदेवाद्विकटापातीति नाम कथमुपपद्यते ?, उच्यते, अरुणो विकटापातिपतिरिति तत्कल्पपुस्तकादिषु आख्यायते, मामानिकादीनामप्यनेनैव नाम्ना प्रसिद्ध इति सामर्थ्याद्विकटापातीति, सुस्थितलवणोदाधिपतेर्गौतमाधिपतित्वाद् गौतमद्वीप इव, बृहत्क्षेत्रविचारादिषु हैरण्यवते विकटापाती हरिवर्षे गन्धापातीत्युक्तं, तत्त्वं तु केवलिगम्यं, एवं यावद्दक्षिणस्यां दिशि मेरौ राजधानी नेतव्या, अथ हरिवर्षनामार्थं पिपृच्छिषुराह—'से केणट्ठेणं' इत्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे हरिवर्षे २ केचन मनुजा अरुणा—रक्तवर्णाः, अरुणं च चीनपिष्टादिकं आमतवस्तूनि अरुणप्रकाशं न कुरुते अभास्वरत्वाद्

इमे च न तथा इत्याह—अरुणावभासा इति, केचन श्वेताः णं पूर्ववत् शङ्खदलानि—शङ्खखण्डास्ते हि अतिश्वेताः स्युस्तेषां सन्निकाशाः—सदृशाः तेन तद्योगाद्धरिवर्षं क्षेत्रमुच्यते, कोऽर्थः ?—हरिशब्देन सूर्यश्चन्द्रश्च तत्र केचन मनुष्याः सूर्य इवारुणा अरुणावभासाः, सूर्यश्चात्र रक्तवर्णप्रस्तावादुद्गच्छन् गृह्यते, केचन चन्द्र इव श्वेता इति, हरय इव हरयो मनुष्याः, साध्यवसानलक्षणयाऽभेदप्रतिपत्तिः, ततस्तद्योगात् क्षेत्रं हरय इति व्यपदिश्यते, हरयश्च तद्वर्षं च हरिवर्षं, यदा च मनुष्ययोगात् हरिशब्दः क्षेत्रे वर्त्तते तदा स्वभावाद्बहुवचनान्तः प्रयुज्यते, यदाह तत्त्वार्थमूलटीकाकृद् गन्धहस्ती—"हरयो विदेहाश्च पञ्चालादितुल्या" इति, यद्वा हरिवर्षनामा अत्र देव आधिपत्यं परिपालयति तेन तद्योगादपि हरिवर्षं ॥ अथानन्तरोक्तं क्षेत्रं निषधाद्दक्षिणस्यामुक्तं तर्हि स निषधः क्वास्तीति पृच्छति—

कहि णं भन्ते ! जम्बुद्दीवे २ णिसहे णाम वासहरपव्वए पण्णत्ते ?, गोयमा ! महाविदेहस्स वासस्स दक्खिणेणं हरिवासस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे णिसहे णामं वासहरपव्वए पण्णत्ते, पाईणपडीणायए उदीणदाहिणविच्छिण्णे दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए जाव पुट्ठे पच्चत्थिमिल्लाए जाव पुट्ठे, चत्तारि जोयणसयाइं उद्धं उच्चत्तेणं चत्तारि गाउअसयाइं उव्वेहेणं सोलस जोअणसहस्साइं अट्ठ य बायाले जोअणसए दोण्णि य एगूणवीसइभाए जोअणस्स विक्खम्भेणं, तस्स बाहा पुरत्थिमपच्चत्थिमेणं वीसं जोअणसहस्साइं एगं च पणट्ठं जोअणसयं दुण्णि अ एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणं, तस्स जीवा उत्तरेणं जाव चउणवइं जोअणसहस्साइं एगं च छप्पण्णं जोअणसयं दुण्णि अ एगूणवीसइभाए

जोअणस्स आयामेणंति, तस्स णं बहुमज्झदेसभाए एत्थ णं जोअणसहस्सं चउत्तीसं च जोअणसयाइं तिण्णि अ ऊसासे जोअणस्स पर य एगूणवीसइभाए जोअणस्स परिक्खेवेणंति सव्वरयणामयपत्तछत्तसंठिए सव्वतवणिज्जमए अच्छे, उच्चो पानि दोहिं पउमवरवेइयाहिं दोहि अ वणसंडेहिं जाव सपरिक्खित्ते, णिसहस्स णं वासहरपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते जाव आसयंति सयंति, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे तिगिंछिद्दहे णामं दहे पण्णत्ते, पाईणपडी-णायए उदीणदाहिणविच्छिण्णे चत्तारि जोअणसहस्साइं आयामेणं दो जोअणसहस्साइं विक्खंभेणं दस जोअणाइं उव्वेहेणं अच्छे सण्हे रययामयकूले, तस्स णं तिगिंछिद्दहस्स चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पं० एवं जाव आयामविक्खम्भविहूणा जा चेव महापउमद्दहस्स वत्तव्वया सा चेव तिगिंछिद्दहस्सवि वत्तव्वया त चेव पउमद्दहप्पमाणं अट्ठो जाव तिगिंछिवण्णाइं, धिई अ इत्थ देवी पलिओवमट्ठिईआ परिवसइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ तिगिंछिद्दहे तिगिंछिद्दहे (सूत्र ८३)

'कहि ण'मित्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे महाविदेहस्य वर्षस्य दक्षिणस्यां हरिवर्षस्योत्तरस्याः पौरस्त्यलवणोदस्य पश्चिमायाः पश्चिमलवणसमुद्रस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे द्वीपे निषधो नाम वर्षधरपर्वतः प्रज्ञप्तः, प्राचीनप्रतीचीने-त्यादि प्राग्वत्, चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतशतान्युद्वेधेन—भूप्रवेशेन, मेरुवर्जसमयक्षेत्रगिरीणां स्वोच्चत्वचतुर्थांशेनोद्वेधत्वात्, षोडश योजनसहस्राणि द्विचत्वारिंशानि—द्विचत्वारिंशदधिकानि अष्टौ च योजनशतानि द्वौ च एकोनविंशतिभागौ योजनस्य विष्कम्भेन, महाहिमवतो द्विगुणविष्कम्भमानत्वात्, अथ बाहादिसूत्रत्रयमाह—

'तस्स वाहा'इत्यादि, 'तस्स जीवा'इत्यादि, अथ यावत्पदात् पाईणपडीणायया दुहओ लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए लवणसमुद्दं जाव पुट्ठा इति ग्राह्यं, 'तस्स धणु'मित्यादि सर्वं पूर्वसूत्रानुसारेण व्याख्येयं। अथ निषधमेव विशेषणैर्विशिनष्टि—'रुअग'इत्यादि, अत्र यावत्पदात् सव्वओ समंता इति ग्राह्यं, शेषं प्राग्वत्। अथास्य देवक्रीडायोग्यत्वं वर्णयन्नाह—'णिसह'इत्यादि, अत्र यावत्पदात् आलिङ्गपुष्करादिपदकदम्बकं बोध्यं। अथ ह्रदवक्तव्यावसरः—'तस्स ण'मित्यादि, तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागेऽत्रान्तरे महानेकः तिगिंछिः—पौष्परजस्तत्प्रधानो द्रहस्तिगिंछिद्रहो नाम द्रहः प्रज्ञप्तः, प्राकृते पुष्परजःशब्दस्य 'तिगिंछि' इति निपातः देशीशब्दो वा, अन्यत् सर्वं प्रागनुसारेणेति, अथास्यातिदेशसूत्रेण सोपानादिवर्णनायाह—'तस्स ण'मित्यादि, तस्य—तिगिंछिद्रहस्य चतुर्दिक्षु चत्वारि त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि, एवमित्थंप्रकारेण ह्रदवर्णके क्रियमाणे यावच्छब्दोऽत्र कार्त्स्न्यवाच्यव्ययं तेन यावत्परिपूर्णा यैव महापद्मद्रहस्य वक्तव्यता आयामविष्कम्भविहीना सैव तिगिंछिद्रहस्य वक्तव्यता, एतदेव व्यक्त्या आचष्टे—'तं चेव'इत्यादि, तदेव—महापद्मद्रहगतमेव पद्मानां—धृतिदेवीकमलानां प्रमाणं—एककोटिविंशतिलक्षपञ्चाशत्सहस्रैकशतविंशतिरूपं, अन्यथाऽत्र पद्मानामायामविष्कम्भरूपप्रमाणस्य महापद्मद्रहगतपद्मेभ्यो द्विगुणत्वेन विरोधापातात्, द्रहस्य च प्रमाणमुद्वेधरूपं बोध्यं, आयामविष्कम्भयोः पृथगुक्तत्वादिति, अर्थः तिगिंछिद्रहस्य वाच्यः,

स चैवं 'से केणट्ठेण भन्ते! एवं वुच्चइ–तिगिंछिदहे २' इत्यादि प्राक्सूत्रानुसारेण वाच्यं यावत् तिगिंछिद्रहवर्णाभानि उत्पलादीनि धृतिश्चात्राधिपत्यं परिपालयति 'से तेणट्ठेणं'इत्यादि प्राग्वत् ॥ अथास्माद्या दक्षिणेन नदी प्रवहति तामाह—

तस्स णं तिगिंछिद्दहस्स दक्खिणिल्लेण तोरणेण हरिमहाणई पवूढा समाणी सत्त जोअणसहस्साइं चत्तारि अ एकवीसे जोअणसए एगं च एगूणवीसइभाग जोअणस्स दाहिणाभिमुही पव्वएण गंता महया घडमुहपवित्तिएण जाव साइरेगचउजोअणसइएणं पवाएणं पवडइ, एव जा चेव हरिकन्ताए वत्तव्वया सा चेव हरीएवि णेअव्वा, जिब्भिआए कुंडस्स दीवस्स भवणम्म त चेव पमाण अट्ठोऽवि भाणिअव्वो जाव अहे जगइ दालइत्ता छप्पण्णाए सलिलासहस्सेहिं समग्गा पुरत्थिम लवणसमुद्द समप्पेइ, तं चेव पवहे अ मुहमूले अ पमाण उव्वेहो अ जो हरिकन्ताए जाव वणसडसपरिक्खित्ता, तस्स ण तिगिंछिदहस्स उत्तरिल्लेण तोरणेणं सीओआ महाणई पवूढा समाणी सत्त जोअणसहस्साइ चत्तारि अ एगवीसे जोअणसए एग च एगूणवीसइभाग जोअणस्स उत्तराभिमुही पव्वएण गता महया घडमुहपवित्तिएण जाव साइरेगचउजोअणसइएणं पवाएण पवडइ, सीओआ णं महाणई जओ पवडइ एत्थ ण मह एगा जिब्भिआ पण्णत्ता चत्तारि जोअणाइं आयामेण पण्णास जोअणाइ विक्खम्भेण जोअण वाहल्लेण मगरमुहविउट्टसठाणसठिआ सव्ववइरामई अच्छा, सीओआ णं महाणई जहिं पवडइ एत्थ ण मह एगे सीओअप्पवायकुण्डे णामं कुण्डे पण्णत्ते चत्तारि असीए जोअणसए आयामविक्खभेण पण्णरसअट्ठारे जोअणसए किंचिविसेसूणे परिक्खेवेण अच्छे एव कुडवत्तव्वया णेअव्वा जाव तोरणा । तस्स ण सीओअप्पवायकुण्डस्स बहुमज्झदेसभाए एत्थ ण मह एगे सीओअदीवे णाम दीवे पण्णत्ते

चउसट्ठिं जोअणाइं आयामविक्खम्भेण दोण्णि विउत्तरे जोअणसए परिक्खेवेणं दो कोसे ऊसिए जलताओ सव्ववइरामए अच्छे सेस तमेव वेइयावणसंडभूमिभागभवणमयणिज्जअट्ठो भाणिअव्वो, तस्स ण सीओअप्पवायकुण्डस्स उत्तरिल्लेण तोरणेण सीओआ महाणई पवूढा समाणी देवकुरु एज्जेमाणा २ चित्तविचित्तकूडे पव्वए निसढदेवकुरुसूरसुलसविज्जुप्पभदहे अ दुहा विभयमाणी २ चउरासीए सलिलासहस्सेहिं आपूरेमाणी २ भद्दसालवण एज्जेमाणी २ मदर पव्वय दोहिं जोअणेहिं असपत्ता पच्चत्थिमाभिमुही आवत्ता समाणी अहे विज्जुप्पभ वक्खारपव्वय दारइत्ता मन्दरस्स पव्वयस्स पच्चत्थिमेण अवरविदेह वास दुहा विभयमाणी २ एगमेगाओ चक्कवट्टिविजयाओ अट्ठावीसाए २ सलिलासहस्सेहिं आपूरेमाणी २ पञ्चहि सलिलासयसहस्सेहिं दुतीसाए अ सलिलासहस्सेहिं समग्गा अहे जयतस्स दारस्स जगइ दालइत्ता पच्चत्थिमेण लवणसमुद्दं समप्पेति, सीओआ ण महाणई पवहे पण्णास जोअणाइ विक्खम्भेण जोअण उव्वेहेण, तयणतर च ण मायाए २ परिवड्ढमाणी २ मुहमूले पञ्च जोअणसयाइ विक्खम्भेण दस जोअणाइ उव्वेहेण उभओपासिं दोहि पउमवरवेइआहिं दोहि अ वणसडेहिं सपरिक्खित्ता ॥ णिसढे णं भन्ते ! वासहरपव्वए ण कति कूडा पण्णत्ता ?, गोयमा ! णव कूडा पण्णत्ता, तजहा—सिद्धाययणकूडे १ णिसढकूडे २ हरिवासकूडे ३ पुव्वविदेहकूडे ४ हरिकूडे ५ धिईकूडे ६ सीओआकूडे ७ अवरविदेहकूडे ८ रुअगकूडे ९ जो चेव चुल्लहिमवंतकूडाणं उच्चत्तविक्खम्भपरिक्खेवो पुव्ववण्णिओ रायहाणी अ सच्चेव इहपि णेअव्वा, से केणट्ठेण भन्ते ! एवं वुच्चइ णिसहे वासहरपव्वए २ ?, गोअमा ! णिसहे ण वासहरपव्वए बहवे कूडा णिसहसठाणसठिआ उसभसठाणसठिआ, णिसहे अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से तेणट्ठेण गोअमा ! एवं वुच्चइ णिसहे वासहरपव्वए २ ( सूत्र ८४ )

'तस्स ण'मित्यादि तस्य तिगिंछिद्रहस्य दाक्षिणात्येन तोरणेन हरिनाम्नी हरिसलिलाऽपरपर्याया महानदी प्रव्यूढा सती सप्तयोजनसहस्राणि चत्वारि च योजनशतानि एकविंशानि—एकविंशत्यधिकानि एकं च एकोनविंशतिभागं योजनस्य दक्षिणाभिमुखी पर्वतेन गत्वा इत्यादि प्राग्वत्, गिरिगन्तव्योपपत्तिस्तु षोडशसहस्राष्टशतद्वाचत्वारिंशद्योजनप्रमाणान्निषधव्यासाद् द्विसहस्रयोजनप्रमाणे ह्रदव्यासेऽपनीते शेषेऽर्द्धीकृते भवतीति । निगमयन्नतिदेशसूत्रमाह—'एव'मित्यादि, 'एव'मित्युक्तप्रकारेण यैव हरिकान्ताया वक्तव्यता सैव हरितोऽपि महानद्या नेतव्या, जिह्विकाया हरिकुण्डस्य हरिद्वीपस्य भवनस्य च तदेव प्रमाणं हरिकान्ताप्रकरणोक्तमवसेयं, अर्थोऽपि हरिद्वीपनाम्नो वाच्यः, अत्र यावत्पदवाच्यं साक्षाल्लिखितं च सर्वं हरिकान्ताप्रकरण इव ज्ञेयं ॥ अथास्माद्या उत्तरेण नदी प्रवहति तामाह—'तस्स णं तिगिंछिद्दह'इत्यादि, व्यक्तं, गिरिगन्तव्यं तु हरिन्नद्या इवावसेयं, अथास्या जिह्विकास्वरूपमाह—'सीओआ'इत्यादि, उत्तानार्थं, नवरमायामेन चत्वारि योजनानि, हरिन्नदीजिह्विकाद्विगुणत्वात्, पञ्चाशद् योजनानि विष्कम्भेन हरिन्नदीप्रवहतो द्विगुणस्य सीतोदाप्रवहस्य मातव्यत्वात्, एवं बाहल्यमपि पूर्वजिह्विकातो द्विगुणमवसेयम्, अथ कुण्डस्वरूपमाह—'सीओआ णं महाणई जहिं'इत्यादि, 'एत्थ ण'मित्यादि, अत्र कुण्डस्य योजनसङ्ख्या हरिकुण्डतो द्वैगुण्येनोपपादनीया । अथ सीतोदाद्वीपस्वरूपमाह—'तस्स ण'मित्यादि, अत्र शीतोदाद्वीपः आयामविष्कम्भाभ्यां चतुःषष्टियोजनानि पूर्वनदीद्वीपतो द्विगुणायामविष्कम्भत्वात्, द्व्यधिके द्वे शते परिक्षेपेण, अत्र सूत्रेऽनुक्तमपि करणवशात्

किञ्चित्साधिकत्वं ज्ञेयं, द्वौ क्रोशौ जलादुत्थितः सर्ववज्रमयः अच्छः शेषमुक्तातिरिक्तं गङ्गाद्वीपप्रकरणोक्तमवसेयं, तच्च विनेयस्मारणार्थं नामतो निर्दिशति–वेदिकावनखण्डभूमिभागभवनशयनीयानि वाच्यानि, अत्र सूत्रे विभक्तिलोपः प्राकृतत्वात्, अर्थश्च शीतोदाद्वीपस्य गङ्गाद्वीपवत् भणितव्य इति । अथ यथेयं पयोधिमुपयाति तथाह—'तस्स णं सीओअप्पवाय'इत्यादि, तस्य शीतोदाप्रपातकुण्डस्य औत्तराहेण तोरणेन शीतोदा महानदी प्रव्यूढा सती देवकुरून् इयूती २–गच्छन्ती २, अत्र सूत्रे एकवचनं आकारान्तत्वं च प्राकृतत्वात्, चित्रविचित्रकूटौ पर्वतौ पूर्वापरकूलवर्त्तिनौ निषध १ देवकुरु २ सूर ३ सुलस ४ विद्युत्प्रभ ५ द्रहाश्च द्विधा विभजन्ती २–तन्मध्ये वहन्ती २, अत्रेयं विभागयोजना–चित्रविचित्रकूटपर्वतयोर्मध्ये वहनेन चित्रकूटं पर्वतं पूर्वतः कृत्वा विचित्रकूटं च पश्चिमतः कृत्वा देवकुरुषु वहन्ती इति, द्रहाश्च पञ्चापि समश्रेणिवर्त्तिन एकैकरूपान् द्विभागीकरणेन वहन्तीति, अत्रान्तराले देवकुरुवर्त्तिभिश्चतुरशीत्या सलिलासहस्रैरापूर्यमाणा २ भद्रशालवनं–मेरुप्रथमवनं इयूती २ मन्दरं पर्वतं द्वाभ्यां योजनाभ्यामसम्प्राप्ता, शीतोदामेर्वोरष्टौ क्रोशा अन्तरालमित्यर्थः, ततः पश्चिमाभिमुखी परावृत्ता सती विद्युत्प्रभं वक्षस्कारपर्वतं नैर्ऋतकोणगतकुरुगोपकगिरिमधो दारयित्वा मन्दरस्य पर्वतस्य पश्चिमेनापरविदेहवर्ष–पश्चिमविदेहं द्विधा विभजन्ती २, एकैकस्माच्चक्रवर्त्तिविजयादष्टाविंशत्या २ नदीसहस्रैरापूर्यमाणा २ तथाहि—अस्या दक्षिणकूलगतविजयाष्टके द्वे द्वे महानद्यौ गङ्गासिन्धुनाम्नी चतुर्दश २ सहस्रनदीपरिवारे उत्तरकूलवर्त्तिविजयाष्टके च द्वे द्वे महानद्यौ

रक्तारक्तवतीनाम्नी तावत्परिवारे स्त इति प्रतिविजयमष्टाविंशतिनदीसहस्राणि, अथ सर्वाग्रेणास्या नदीपरिवारं विशेषणद्वारेणाह–पञ्चभिर्नदीलक्षैर्द्वात्रिंशता च नदीसहस्रैः समग्रा–परिपूर्णा, तथाहि–अस्या उभयकूलवर्त्तिविजयषोडशकेऽष्टाविंशतिर्नदीसहस्राणीत्यष्टाविंशतिसहस्राणि षोडशभिर्गुण्यंते, जातं चतुर्लक्षाण्यष्टचत्वारिंशत्सहस्राणि, अत्र राशौ कुरुगत ८४ सहस्रनदीप्रक्षेपे जातं यथोक्तं मानमिति, अधो जयन्तस्य द्वारस्य–पश्चिमदिग्वर्त्तिजम्बूद्वीपद्वारस्य जगतीं दारयित्वा पश्चिमेन–पश्चिमभागेन लवणसमुद्रं समुपसर्पतीति ॥ अधुनाऽस्या विष्कम्भाद्याह—'सीओआ' इत्यादि, शीतोदा महानदी प्रवहे–ह्रदनिर्गमे पञ्चाशद्योजनानि विष्कम्भेन, हरिन्नदीप्रवहादस्याः प्रवहस्य द्विगुणत्वात्, योजनमुद्वेधेन–उण्डत्वेन, पञ्चाशद्योजनानां पञ्चाशता भागे एकस्यैव लाभात्, तदनन्तरं मात्रया २–क्रमेण २ प्रतियोजनं समुदितयोरुभयोः पार्श्वयोरशीतिधनुर्वृद्ध्या, प्रतिपार्श्वं चत्वारिंशद्धनुर्वृद्ध्येत्यर्थः, परिवर्द्धमाना २ मुखमूले–समुद्रप्रवेशे पञ्च योजनशतानि निष्कम्भेन प्रवहविष्कम्भापेक्षया मुखविष्कम्भस्य दशगुणत्वात्, दशयोजनान्युद्वेधेन, आद्यप्रवहोद्वेधापेक्षयाऽस्य दशगुणत्वात्, शेषं व्यक्तं ॥ अथ निषधे कूटवक्तव्यमाह—'णिसढे ण' मित्यादि,

---

१ यथा सीतोदाया उत्तरकूलविजयेषु रक्तारक्तवत्यौ दक्षिणकूलकाये च गङ्गासिंधू तथा न शीताया किन्तु उत्तरतो गङ्गासिन्धू दक्षिणत इतरे इति (ही०वृत्तौ) २ 'गगादिसीतोदापर्यन्तनदीना जलप्रवेशनिमित्त समुद्रोऽपि तत्र तत्र प्रदेशे अनादिजगत्स्थित्या यावज्जलप्रवेशोचितप्रणालयुक्त सभाव्यते अतो न किंचिदनुपपन्न ( ही० वृत्तौ )। तेन योजनसहस्रनिम्नत्वे कथ शीतोदाया समुद्रे प्रवेश इति नाशङ्क्य ।

सिद्धायतनकूटं निषधवर्षधराधिपवासकूटं हरिवर्षक्षेत्रपतिकूटं पूर्वविदेहपतिकूटं हरिसलिलानदीसुरीकूटं धृतिः—तिगिंछिद्रहसुरी तस्याः कूटं शीतोदानदीसुरीकूटं अपरविदेहपतिकूटं रुचकः—चक्रवालगिरिविशेषस्तदधिपतिकूटं, अत्र वक्तव्येऽतिदेशसूत्रमाह—'जो चेव'इत्यादि, य एव क्षुद्रहिमवति कूटानामुच्चत्वविष्कम्भाभ्यां सहितः परिक्षेपः उच्चत्वविष्कम्भपरिक्षेपः, चशब्दात् कूटवर्णकः पूर्ववर्णितः—अधस्तनग्रन्थोक्तः स एव इहापि ज्ञातव्यः, तथाहि—पञ्चयोजनशतान्युच्चत्वं मूलविष्कम्भश्चेत्यादि, राजधानी च सैव इहापि नेतव्या, अत्र लिङ्गविपरिणामेनार्थयोजना इति, कोऽर्थः ?—यथा क्षुद्रहिमवद्गिरिकूटस्य दक्षिणेन तिर्यगसङ्ख्येयान् द्वीपसमुद्रान् व्यतिव्रज्यान्यस्मिन् जम्बूद्वीपे क्षुद्रहिमवती नाम्नी राजधानी तथा इहापि निषधा नाम राजधानीति, अधुनाऽस्य नामार्थं प्रश्नयन्नाह—'से केणट्ठेणं'—मित्यादि, व्यक्तं, नवरं निषधे वर्षधरपर्वते बहूनि कूटानि निषधसंस्थानसंस्थितानि, तत्र नितरां सहते स्कन्धे पृष्ठे वा समारोपितं भारमिति निषधो—वृषभः पृषोदरादित्वादिष्टरूपसिद्धिः तत्संस्थानसंस्थितानि, एतदेव पर्यायान्तरेणाह—वृषभसंस्थितानि, निषधश्चात्र देव आधिपत्यं परिपालयति, तेन निषधाकारकूटयोगान्निषधदेवयोगाद्वा निषध इति व्यवह्रियते इति ॥ अथ यन्निषधसूत्रे 'महाविदेहस्स वासस्स दक्खिणेण'मित्युक्तं तत् किं महाविदेहमित्याह—

कहि णं भन्ते ! जम्बुद्दीवे दीवे महाविदेहे णाम वासे पण्णत्ते ?, गोअमा ! णीलवन्तस्स वासहरपव्वयस्स दक्खिणेणं णिसहस्स वासहरपव्वयस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेण पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेण एत्थ णं जम्बुद्दीवे २ महाविदेहे णाम

वासे पण्णत्ते, पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलिअंकसंठाणसठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिम जाव पुट्ठे पच्चत्थि-मिल्लाए कोडीए पच्चत्थिमिल्ल जाव पुट्ठे तित्तीस जोअणसहस्साइं छच्च चुलसीए जोअणसए चत्तारि अ एगूणवीसइभाए जोअणस्स विक्खम्भेणति, तस्स वाहा पुरत्थिमपच्चत्थिमेणं तेत्तीस जोअणसहस्साइं सत्त य सत्तसट्ठे जोअणसए सत्त य एगूणवीसइभाए जोअ-णस्स आयामेणति, तस्स जीवा वहुमज्झदेसभाए पाईणपडीणायया दुहा लवणसमुद्द पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्ल जाव पुट्ठा एवं पच्चत्थिमिल्लाए जाव पुट्ठा, एग जोयणसयसहस्स आयामेणति, तस्स धणु उभओ पासिं उत्तरदाहिणेण एग जोय-णसयसहस्स अट्ठावण्ण जोअणसहस्साइ एग च तेरसुत्तर जोअणसय सोलस य एगूणवीसइभागे जोयणस्स किंचिविसेसाहिए परिक्खेवेणंति, महाविदेहे ण वासे चउव्विहे चउप्पडोआरे पण्णत्ते, तजहा—पुव्वविदेहे १ अवरविदेहे २ देवकुरा ३ उत्तरकुरा ४, महाविदेहस्स ण भन्ते! वासस्स केरिसए आगारभावपडोआरे पण्णत्ते ?, गोअमा! वहुसमरमणिज्जे भूमिभागे पण्णत्ते जाव कित्ति-मेहिं चेव अकित्तिमेहिं चेव । महाविदेहे णं भन्ते! वासे मणुआणं केरिसए आयारभावपडोआरे पण्णत्ते ?, तेसि ण मणुआण छव्विहे सघयणे छव्विहे सठाणे पञ्चधणुसयाइ उद्ध उच्चत्तेण जहण्णेण अतोमुहुत्त उक्कोसेण पुव्वकोडीआउअं पालेन्ति पालेत्ता अप्पेगइआ णिरयगामी जाव अप्पेगइआ सिज्झति जाव अत करेन्ति । से केणट्ठेण भन्ते! एवं वुच्चइ–महाविदेहे वासे २ ?, गोअमा! महाविदेहे ण वासे भरहेरवयहेमवयहेरण्णवयहरिवासरम्मगवासेहिंतो आयामविक्खम्भसठाणपरिणाहेणं विच्छिण्ण-तराए चेव विपुलतराए चेव महंततराए चेव सुप्पमाणतराए चेव महाविदेहा य इत्थ मणूसा परिवसति, महाविदेहे अ इत्थं देवे

महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ, से तेणट्ठेण गोअमा! एव वुच्चइ—महाविदेहे वासे २, अदुत्तर च णं गोअमा! महाविदेहस्स वासस्स सासए णामधेज्जे पण्णत्ते, ज ण कयाइ णासि ३ ( सूत्र ८५ )

'कहि ण'मित्यादि, क भदन्त! इत्यादि सूत्रं स्वयं योज्यं, नवरं महाविदेहं नाम वर्ष—चतुर्थ क्षेत्रं प्रज्ञप्तं?, गौतम! नीलवतो वर्षधरपर्वतस्य चतुर्थस्य क्षेत्रविभागकारिणो दक्षिणेनेत्यर्थः 'णिसहस्स'इत्यादि व्यक्तं, नवरं पल्यङ्कसंस्थानसंस्थितमायतचतुरस्रत्वात्, विस्तारेण त्रयस्त्रिंशद्योजनसहस्राणि षट् च योजनशतानि चतुरशीत्यधिकानि चतुरश्चैकोनविंशतिभागान् योजनस्य विष्कम्भेन, निषधविष्कम्भाद् द्विगुणविष्कम्भकत्वात्, अथ वाहादिसूत्रत्रयमाह—'तस्स वाहा'इत्यादि, तस्य महाविदेहस्य वर्षस्य पूर्वापरभागेन वाहा प्रत्येकं त्रयस्त्रिंशद् योजनसहस्राणि सप्त च योजनशतानि सप्तषष्ट्याऽधिकानि सप्त च एकोनविंशतिभागान् योजनस्य आयामेनेति, ननु "महया धणुपट्ठाओ डहरागं सोहिआहि धणुपट्ठं। जं तत्थ हवइ सेसं तस्सद्धे णिद्दिसे वाहं ॥ १ ॥" इति वचनात् महतो धनुःपृष्ठाद् विदेहानां दक्षिणार्द्धस्योत्तरार्द्धस्य च सम्बन्धिनो लक्षमेकमष्टपञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं योजनानां षोडश च कलाः सार्द्धाः योजन १५८११३ कलाः १६ कलार्द्धं चेत्येवंपरिणामाल्लघु धनुःपृष्ठं निषधादिसम्बन्धि लक्षमेकं चतुर्विंशतिसहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि योजनानां नव च कला योजन १२४३४६ कला ९ इत्येवंपरिमाणं शोधय, ततश्च शेषमिदं त्रयस्त्रिंशत्सहस्राणि सप्त शतानि सप्तषष्ट्यधिकानि योजनानां सप्त च कलाः सार्द्धाः

योजनानां ३३७६७ कला ७ कलार्द्धं च, एषामर्द्धं षोडश योजनसहस्राणि अष्टौ शतानि त्र्यशीत्यधिकानि योजनानां त्रयोदश च कलाः सपादाः इत्येवंरूपा बाहा विदेहानां सम्भवति, अत्र तु त्रयस्त्रिंशत्सहस्रादिरूपा उक्ता तत्किमिति ?, उच्यते, सर्वत्र वैताढ्यादिषु पूर्वबाहा अपरबाहा च यावती दक्षिणतस्तावती उत्तरतोऽपि परं व्यवहितत्वेन सा सम्मील्य नोक्ता, इयं तु सम्मिलितत्वात् संमील्यैवोक्ता सूत्रे दक्षिणबाहाप्रमाणेवोत्तरबाहेत्येनमर्थं बोधयितुमिति । अथास्य जीवामाह—'तस्स जीवा' इत्यादि, तस्य विदेहस्य जीवा बहुमध्यदेशभागे विदेहमध्ये इत्यर्थः, अन्येषां तु वर्षवर्षधराणां चरमप्रदेशपङ्क्तिर्जीवा अस्य तु मध्यप्रदेशपङ्क्तिरित्यर्थः, इयमेव च जम्बूद्वीपमध्यं अत एव चायामेन लक्षयोजनमाना, मध्यमात्परतस्तु जम्बूद्वीपस्य सर्वत्र दक्षिणत उत्तरतो वा लक्षान्न्यूनन्यूनमानत्वात्, अथास्य धनुःपृष्ठमाह—'तस्स धणुं' इत्यादि, तस्य विदेहस्योभयोः पार्श्वयोः एतदेव विवृणोति—'उत्तरदाहिणेणं'ति उत्तरपार्श्वे दक्षिणपार्श्वे वा एकं योजनलक्षं अष्टपञ्चाशच्च योजनसहस्राणि एकं च योजनशतं त्रयोदशोत्तरं षोडश चैकोनविंशतिभागान् योजनस्य किंचिद्विशेषाधिकान् परिक्षेपेण, यच्चान्यत्र सार्द्धाः षोडश कला उक्तास्तदत्र किंचिद्विशेषाधिकपदेन संगृहीतं, उद्धरितकलांशास्तु न विवक्षिता इति, अत्राधिकार्थसूचनार्थं करणान्तरं दर्श्यते—जम्बूद्वीपपरिधिस्तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके योजनानां क्रोशत्रयमष्टाविंशं धनुःशतं त्रयोदशांगुलान्येकमर्द्धांगुलं योजन ३१६२२७ क्रोश ३ धनूंषि १२८ अंगुल १३ अर्द्धांगुलं ½, तत्र योजनराशिरर्द्धीक्रियते, लब्धमेकं लक्षमष्टापञ्चाशत्स-

ह्स्राणि शतमेकं त्रयोदशाधिकं योजन १५८११३, यस्त्वेकं योजनं शेषं तत्कलाः क्रियन्ते लब्धाः एकोनविंशतिः क्रोशत्रये च लब्धाः सपादाश्चतुर्दश कलाः उभयमीलने जाताः सपादास्त्रयस्त्रिंशत् कलाः तासामर्द्धे लब्धाः सार्द्धाः षोडश कलाः, यश्च कलाया अष्टमो भागोऽधिक उद्धरति यानि च धनुषामर्द्धे लब्धानि चतुःषष्टिर्धनूंषि यानि च सार्द्धत्रयोदशांगुलानामर्द्धे पादोनानि सप्तांगुलानि तदेतत्सर्वमल्पत्वान्न विवक्षितमिति ॥ अधुना विदेहवर्षस्य भेदान्निरूपयन्नाह—'महाविदेहे ण'मित्यादि, महाविदेहं वर्षं चतुर्विधं—चतुष्प्रकारं पूर्वविदेहाद्यन्यतरस्य महाविदेहत्वेन व्यपदिश्यमानत्वात्, अत एव चतुर्षु—पूर्वापरविदेहदेवकुरूत्तरकुरुरूपेषु क्षेत्रविशेषेषु प्रत्यवतारः—समवतारो विचारणीयत्वेन यस्य तत्तथा, चतुर्विधस्य पर्यायो वाऽयं, तत्र पूर्वविदेहो यो मेरोर्जम्बूद्वीपगतः प्राग्विदेहः, एवं पश्चिमतः सोऽपरविदेहः दक्षिणतो देवकुरुनामा विदेहः उत्तरतस्तु उत्तरकुरुनामा विदेहः, ननु पूर्वापरविदेहयोः समानक्षेत्रानुभावकत्वेन महाविदेहव्यपदेश्यताऽस्तु, देवकुरूत्तरकुरूणां त्वकर्मभूमिकत्वेन कथं महाविदेहत्वेन व्यपदेशः?, उच्यते, प्रस्तुतक्षेत्रयोर्भरताद्यपेक्षया महाभोगत्वात् महाकायमनुष्ययोगित्वान्महाविदेहदेवाधिष्ठेयत्वाच्च महाविदेहवाच्यता समुचितैवेति सर्वं सुस्थं । अथास्य स्वरूपं वर्णयितुमाह—'महाविदेह'इत्यादि, प्राग्वत्, अत्र यावत्करणात् 'आलिंगपुक्खरे इ वा जाव णाणाविहपञ्चवण्णेहिं मणीहिं तणेहि अ उवसोभिए'इति, सम्प्रत्यत्र मनुजस्वरूपमाह—'महाविदेहे ण'-मित्यादि, प्राग्वत्, आभ्यां सूत्राभ्यामस्य कर्मभूमित्वमभाणि अन्यथा कर्षकादिप्रवृत्ताना तृणादीनां कृत्रिमत्वं तद्वर्ष-

जाताना च मनुष्याणा पञ्चमगतिगामित्वं न स्यात्, अथास्य नामार्थं प्रश्नयन्नाह—'से केणट्ठेण'मित्यादि, प्राग्वत्, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे—गौतम! महाविदेहो वर्षं भरतैरावतहैमवतहैरण्यहरिवर्षरम्यकवर्षेभ्यः आयामविष्कम्भसंस्थानपरिणाहेन, समाहारादेकवद्भावः, तत्रायामादित्रिकं प्रतीतं, परिणाहः—परिधिः, अत्र च व्यस्ततया विशेषणनिर्देशेऽपि योजना यथासम्भवं भवतीत्यायामेन महत्तरक एव लक्षप्रमाणजीवाकत्वात्, तथा विष्कम्भेन विस्तीर्णतरक एव साधिकचतुरशीतिपद्शताधिकत्रयस्त्रिंशद्योजनसहस्रप्रमाणत्वात्, तथा संस्थानेन पल्यङ्करूपेण विपुलतरक एव पार्श्वद्वयेऽपीपयोस्तुल्यप्रमाणत्वात्, हैमवतादीनां पल्यङ्कसंस्थितत्वेऽपि पूर्वजगतीकोणानां संवृतत्वेन पूर्वापरेपयोर्वैपम्यादिति, तथा परिणाहेन सुप्रमाणतरक एव, एतद्धनुःपृष्ठस्य जम्बूद्वीपपरिध्यर्द्धमानत्वादिति, अत एव महान्—अतिशयेन विकृष्टो—गरीयान् देहः—शरीरमाभोग इतियावत् येषां ते महाविदेहाः, अथवा महान्—अतिशयेन विकृष्टो—गरीयान् देहः—शरीरं कलेवरं येषां ते तथा, ईदृशास्तत्रत्या मनुष्याः, तथाहि—तत्र विजयेषु सर्वदा पञ्चधनुःशतोच्छ्रया देवकुरूत्तरकुरुषु त्रिगव्यूतोच्छ्रयाः ततो महाविदेहमनुष्ययोगादिदमपि क्षेत्रं महाविदेहाः, महाविदेहश्च शब्दः स्वभावाद् बहुवचनान्त एव, एतच्च प्रागेवोक्तं, ततो बहुवचनेन व्यवह्रियते, दृश्यते च क्वचिदेकवचनान्तोऽपि, तदपि प्रमाणं, पूर्वमहर्षिभिस्तथाप्रयोगकरणात्, अथवा महाविदेहनामा देवोऽत्राधिपत्यं परिपालयति, तेन तद्योगादपि महाविदेह इति, शेषं प्राग्वत् ॥ सम्प्रत्युत्तरकुरूवक्तुकामस्तदुपयोगित्वेन प्रथमं गन्धमादनवक्षस्कारगिरिप्रश्नमाह—

कहि ण भन्ते ! महाविदेहे वासे गन्धमायणे णाम वक्खारपव्वए पण्णत्ते?, गोअमा! णीलवन्तस्स वासहरपव्वयस्स दाहिणेण मंदरस्स पव्वयस्स उत्तरपच्चत्थिमेण गंधिलावइस्स विजयस्स पुरच्छिमेण उत्तरकुराए पच्चत्थिमेण एत्थ णं महाविदेहे वासे गन्धमायणे णाम वक्खारपव्वए पण्णत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे तीस जोअणसहस्साइं दुण्णि अ णउत्तरे जोअणसए छच्च य एगूणवीसइभाए जोअणस्स आयामेणं णीलवंतवासहरपव्वयतेण चत्तारि जोअणसयाइ उद्धं उच्चत्तेणं चत्तारि गाउअसयाइ उव्वेहेणं पञ्च जोअणसयाइं विक्खम्भेण तयणतर च ण मायाए २ उस्सेहुव्वेहपरिवद्धीए परिवद्धमाणे २ विक्खम्भपरिहाणीए परिहायमाणे २ मंदरपव्वयंतेण पञ्च जोअणसयाइ उद्धं उच्चत्तेण पञ्च गाउअसयाइ उव्वेहेणं अगुलस्स असखिज्जइभागं विक्खम्भेणं पण्णत्ते गयदन्तसठाणसठिए सव्वरयणामए अच्छे, उभओ पासिं दोहिं पउमवरवेइआहिं दोहिं अ वणसडेहिं सव्वओ समन्ता सपरिक्खित्ते, गन्धमायणस्स ण वक्खारपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे जाव आसयन्ति । गन्धमायणे ण वक्खारपव्वए कति कूडा पण्णत्ता?, गो० ! सत्त कूडा, तंजहा—सिद्धाययणकूडे १ गन्धमायणकूडे २ गंधिलावईकूडे ३ उत्तरकूरुकुडे ४ फलिहकूडे ५ लोहियक्खकूडे ६ आणदकूडे ७ । कहि णं भन्ते ! गधमायणे वक्खारपव्वए सिद्धाययणकूडे णाम कूडे पण्णत्ते?, गोअमा! मदरस्स पव्वयस्स उत्तरपच्चत्थिमेण गधमायणकूडस्स दाहिणपुरत्थिमेण, एत्थ णं गधमायणे वक्खारपव्वए सिद्धाययणकूडे णामं कूडे पण्णत्ते, ज चेव चुल्लहिमवन्ते सिद्धाययणकूडस्स पमाणं तं चेव एएसिं सव्वेसिं भाणिअव्वं, एव चेव विदिसाहिं तिण्णि कूडा भाणिअव्वा, चउत्थेत तिअस्स उत्तरपच्चत्थिमेणं पञ्चमस्स दाहिणेण, सेसा उ उत्तरदाहिणेण, फलिहलोहिअक्खेसु भोगंकर-भोगवईओ देवयाओ सेसेसु सरिसणामया देवा, छसुवि पासायवडेंसगा रायहाणीओ विदिसासु, से केणट्ठेणं भन्ते ! एवं वुच्चइ

गधमायणे वक्खारपव्वए २ [2], गो० ! गधमायणस्स ण वक्खारपव्वयस्स गंधे से जहा णामए कोट्ठपुडाण वा जाव पीसिज्जमाणाण वा उक्किरिज्जमाणाण वा विकिरिज्जमाणाण वा परिभुज्जमाणाण वा जाव ओराला मणुण्णा जाव गधा अभिणिस्सवन्ति, भवे एआरूवे [2], णो इणट्ठे समट्ठे, गधमायणस्स ण इत्तो इट्ठतराए चेव जाव गधे पण्णत्ते, से एएणट्ठेण गोअमा ! एव वुच्चइ गधमायणे वक्खारपव्वए २, गधमायणे अ इत्थ देवे महिद्धीए परिवसइ, अदुत्तर च ण सासए णामधिज्जे इति । (सूत्रं ८६) कहि ण भन्ते ! महाविदेहे वासे उत्तरकुरा णाम कुरा प०, गो० ! मदरस्स पव्वयस्स उत्तरेण णीलवन्तस्स वासहरपव्वयस्स दक्खिणेण गन्धमायणस्स वक्खारपव्वयस्स पुरत्थिमेणं मालवन्तस्स वक्खारपव्वयस्स पच्चत्थिमेण एत्थ ण उत्तरकुरा णाम कुरा पण्णत्ता पाईणपडीणायया उदीणदाहिणविन्छिण्णा अद्धचदसठाणसठिआ इक्कारस जोअणसहस्साइ अट्ठ य वायाले जोअणसए दोण्णि अ एगूणवीसइभाए जोअणस्स विक्खम्भेणति, तीसे जीवा उत्तरेण पाईणपडीणायया दुहा वक्खारपव्वयं पुट्ठा, तंजहा—पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं वक्खारपव्वय पुट्ठा एवं पच्चत्थिमिल्लाए जाव पच्चत्थिमिल्ल वक्खारपव्वय पुट्ठा, तेवण्णं जोअणसहस्साइं आयामेणन्ति, तीसे ण धणु दाहिणेण सट्ठि जोअणसहस्साइ चत्तारि अ अट्ठारसे जोअणसए दुवालस य एगूणवीसइभाए जोअणस्स परिक्खेवेण, उत्तरकुराए णं भन्ते ! कुराए केरिसए आयारभावपडोआरे पण्णत्ते [2], गोयमा ! वहुसमरमणिज्जे भूमिभागे पण्णत्ते, एवं पुव्ववण्णिआ जच्चेव सुसमसुसमावत्तव्वया सच्चेव णेअव्वा जाव पउमगधा १ मिअगधा २ अममा ३ सहा ४ तेतली ५ सणिंचारी ६ ( सूत्र ८७)

'कहि ण'मित्यादि, क्व भदन्त ! महाविदेहे वर्षे गन्धमादनो नाम वक्षसि—मध्ये स्वगोप्यं क्षेत्रं द्वौ संभूय कुर्वन्तीति वक्षस्काराः, तज्जातीयोऽयमिति वक्षस्कारपर्वतो गजदन्तापरपर्यायः प्रज्ञप्तः ?, गौतम ! नीलवन्नाम्नो वर्षधरपर्वतस्य दक्षिणभागेन मन्दरस्य पर्वतस्य—मेरोरुत्तरपश्चिमेन—उत्तरस्याः पश्चिमायाश्च अन्तरालवर्त्तिना दिग्विभागेन वायव्यकोणे इत्यर्थः, गन्धिलावत्याः—शीतोदोत्तरकूलवर्त्तिनोऽष्टमविजयस्य पूर्वेण उत्तरकुरूणां—सर्वोत्कृष्टभोगभूमिक्षेत्रस्य पश्चिमेन अत्रान्तरे महाविदेहे वर्षे गन्धमादनो नाम वक्षस्कारपर्वतः प्रज्ञप्तः, उत्तरदक्षिणयोरायतः प्राचीनप्रतीचीनयोः—पूर्वपश्चिमयोर्दिशोः विस्तीर्णः, त्रिंशद्योजनसहस्राणि द्वे च नवोत्तरे योजनशते षट् च एकोनविंशतिभागान् योजनस्यायामेन, अत्र यद्यपि वर्षधराद्रिसम्बद्धमूलानां वक्षस्कारगिरीणां साधिकैकादशाष्टशतद्विचत्वारिंशद्योजनप्रमाणकुरुक्षेत्रान्तर्वर्त्तिनामेतावानायामो न सम्पद्यते तथाऽप्येषां वक्रभावपरिणतत्वेन वहुतरक्षेत्रावगाहित्वात् सम्भवतीति, नीलवद्वर्षधरसमीपे चत्वारि योजनशतानि ऊर्ध्वोच्चत्वेन चत्वारि गव्यूतशतानि उद्वेधेन पञ्चयोजनशतानि विष्कम्भेन, तदनन्तरं मात्रया २—क्रमेण क्रमेणोत्सेधोद्वेधयोः—उच्चत्वोण्डत्वयोः परिवृद्ध्या परिवर्द्धमानः २ विष्कम्भपरिहाण्या परिहीयमाणः २ मन्दरपर्वतस्य—मेरोरन्ते—समीपे पञ्चयोजनशतान्यूर्ध्वोच्चत्वेन पञ्चगव्यूतिशतानि उद्वेधेन अंगुलस्यासङ्ख्यभागं विष्कम्भेन प्रज्ञप्तः, गजदन्तस्य यत्संस्थानं—प्रारम्भे नीचत्वमन्ते उच्चत्वमित्येवंरूपं तेन संस्थितः, सर्वात्मना रत्नमयः, श्रीउमास्वातिवाचककृतजम्बूद्वीपसमासप्रकरणे तु कनकमय इति, शेषं प्राग्वत्, अथास्य भूमिसौ-

भाग्यमावेदयति–'गन्धमायण'इत्यादि, गन्धमादनस्य वक्षस्कारपर्वतस्योपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, अत्र यावत्पदाद्वैताढ्याद्रिशिखरतलवर्णकगतं सर्वं बोध्यं। सम्प्रत्यत्र कूटवक्तव्यतामाह—'गन्धमायण'इत्यादि, व्यक्तं, नवरं स्फटिककूटं स्फटिकरत्नमयत्वात् लोहिताक्षकूटं लोहितरत्नवर्णत्वात्, आनन्दनाम्नो देवस्य कूटमानन्दकूटं। ननु यथा वैताढ्यादिषु सिद्धायतनादिकूटव्यवस्था पूर्वापरायतत्वेन तद्वदत्रापि उत कश्चिद्विशेष इत्याह—'कहि णं भन्ते!'इत्यादि, व्यक्तं, नवरं यथा वैताढ्यादिषु सिद्धायतनकूटं समुद्रासन्नं पूर्वेण ततः क्रमेण शेषाणि स्थितानि तथाऽत्र मन्दरासन्नं सिद्धायतनकूटं मन्दरादुत्तरपश्चिमायां वायव्यां दिशि गन्धमादनकूटस्य तु दक्षिणपूर्वस्यां–आग्नेय्यामस्ति, यदेव क्षुद्रहिमवति सिद्धायतनकूटस्य प्रमाणं तदेवैतेषां सर्वेषां सिद्धायतनादिकूटानां भणितव्यं, अर्थाद् वर्णनमपि तद्वदेवेति, व्यवस्था तु शेषकूटानामत्र भिन्नप्रकारेणेति मनसिकृत्याह–'एवं चेव'इत्यादि, एवं चेवेत्येवं–सिद्धायतनानुसारेण विदिक्षु–वायव्यकोणेषु त्रीणि कूटानि सिद्धायतनादीनि भणितव्यानि, उक्तवक्तव्यानां मिश्रितनिर्देशस्तु 'एवं चत्तारिविदारा भाणिअव्वा' इति सूत्रविवरणोक्तयुक्त्या समाधेयः, अयमर्थः–मेरुत उत्तरपश्चिमाया सिद्धायतनकूटं, तस्मादुत्तरपश्चिमायां गन्धमादनकूटं तस्माच्च गन्धिलावतीकूटमुत्तरपश्चिमायामिति, अत्र तिस्रो वायव्यो दिशः समुदिता विवक्षिता इति बहुत्वेन निर्देशः, चतुर्थमुत्तरकुरुकूटं तृतीयस्य गन्धिलावतीकूटस्योत्तरपश्चिमायां पञ्चमस्य स्फटिककूटस्य दक्षिणतः, ननु यथा तृतीयाद् गन्धिलावतीकूटाच्चतुर्थं उत्तरकुरुकूटमुत्तरपश्चिमायां चतुर्थाच्च तृतीयं दक्षिणपूर्वस्या

तथा पञ्चमात् स्फटिककूटात् कथं दक्षिणपूर्वस्यां चतुर्थं कूटं न सङ्गच्छते?, उच्यते, पर्वतस्य वक्रत्वेन चतुर्थकूटत एव दक्षिणपूर्वां प्रति वलनात् पञ्चमाच्चतुर्थं दक्षिणस्यामिति, शेषाणि स्फटिककूटादीनि त्रीणि उत्तरदक्षिणश्रेणिव्यवस्थया स्थितानि, कोऽर्थः?—पंचमं चतुर्थस्योत्तरतः षष्ठस्य दक्षिणतः षष्ठं पंचमस्योत्तरतः सप्तमस्य दक्षिणतः सप्तमं षष्ठस्योत्तरत इति परस्परमुत्तरदक्षिणभाव इति, अत्र पंचशतयोजनविस्ताराण्यपि कूटानि यत् क्रमहीयमानेऽपि प्रस्तुतगिरिक्षेत्रे मान्ति तत्र सहस्राङ्ककूटरीतिर्ज्ञेया, अथैषामेवाधिष्ठातृस्वरूपं निरूपयति—'फलिहलोहिअक्खे'इत्यादि, स्फटिककूटलोहिताक्षकूटयोः पंचमषष्ठयोर्भोगङ्कराभोगवत्यौ द्वे देवते—दिक्कुमार्यौ वसतः, शेषेषु कूटसदृशनामका देवाः, षट्स्वपि प्रासादावतंसकाः स्वस्वाधिपतिवासयोग्याः, एषां च राजधान्योऽसङ्ख्याततमे जम्बूद्वीपे विदिक्षु उत्तरपश्चिमासु। सम्प्रति नामार्थं पिपृच्छिषुराह—'से केणट्ठेणं'इत्यादि प्रश्नसूत्रं सुगमं, उत्तरसूत्रे गन्धमादनस्य वक्षस्कारपर्वतस्य गन्धः स यथा नाम कोष्ठपुटाना यावत्पदात् तगरपुटादीनां संग्रहः पिष्यमाणानां वा—संचूर्ण्यमानाना उत्कीर्यमाणानां वा विकीर्यमाणानां वा परिभुज्यमानानां वा यावत्पदात् भाण्डात् भाण्डान्तरं वा संह्रियमाणानामिति, उदारा—मनोज्ञाः यावत्पदात् गन्धा इति कर्तृपदं, अभिनिःस्रवन्ति, एवमुक्ते शिष्यः पृच्छति—भवेदेतद्रूपो गन्धमादनस्य गन्ध इति?, भगवानाह—नायमर्थः समर्थः, गन्धमादनस्य इतो—भवदुक्ताद् गन्धादिष्टतरक एव यावत्करणात् कान्ततरक एवेत्यादिपदग्रहः, निगमनवाक्ये तेनार्थेन गौतम एवमुच्यते, गन्धेन स्वयं माद्यतीव

मदयति वा तन्निवासिदेवदेवीनां मनांसि इति गन्धमादनः, 'कृद्बहुल' (श्रीसिद्ध० अ० ५ पा० १ सू० २) मिति वचनात् कर्त्तर्यनट्प्रत्ययः, 'घञ्युपसर्गस्य वे' (श्रीसिद्ध० अ० ३ पा० २ सू० ८६) त्यत्र वहुलाधिकारादतिशायितादिवत् मकाराकारस्य दीर्घत्वमिति, गन्धमादननामा चात्र देवो महर्द्धिकः परिवसति, तेन तद्योगादिति नाम, अन्यत् सर्वं प्राग्वत्॥ अथ यासामुपयोगित्वेन गन्धमादनो निरूपितस्ता उत्तरकुरूः निरूपयति—'कहि ण'मित्यादि, क्व भदन्त! महाविदेहे वर्षे उत्तरकुरवो नाम्ना कुरवः प्रज्ञप्ताः?, गौतम! मन्दरस्य पर्वतस्योत्तरतो नीलवतो वर्षधरपर्वतस्य दक्षिणतो गन्धमादनस्य वक्षस्कारपर्वतस्य पूर्वतो वक्ष्यमाणस्वरूपस्य माल्यवतः पश्चिमतः अत्रान्तरे उत्तरकुरवो नाम्ना कुरवः प्रज्ञप्ताः, प्राक्पश्चिमायता उत्तरदक्षिणाविस्तीर्णाः अर्द्धचन्द्राकारा एकादशयोजनसहस्राण्यष्टौ शतानि द्वाचत्वारिंशदधिकानि द्वौ चैकोनविंशतिभागौ योजनस्य विष्कम्भेन, अत्रोपपत्तिर्यथा महाविदेहविष्कम्भात् ३३६८४ कला ४ इत्येवंरूपात् मेरुविष्कम्भेऽपनीते शेषस्यार्द्धे कृते उक्ताङ्कराशिः स्यात्, ननु वर्षवर्षधरादीनां क्रमव्यवस्था प्रज्ञापकापेक्षयाऽस्ति यथा प्रज्ञापकासन्नं भरतं ततो हिमवानित्यादि, ततो विदेहकथनानन्तरं क्रमप्राप्ता देवकुरूर्विमुच्य कथमुत्तरकुरूणां निरूपणं?, उच्यते, चतुर्दिग्मुखे विदेहे प्रायः सर्वं प्रादक्षिण्येन व्यवस्थाप्यमानं समये श्रूयते, तेन प्रथमत उत्तरकुरुकथनं भरतपार्श्वस्थौ विद्युत्प्रभसौमनसौ विहाय गन्धमादनमाल्यवद्वक्षस्कारप्ररूपणं भरतासन्नविजयान् विहाय कच्छमहाकच्छादिविजयकथनं चेति, अथैतासां जीवामाह—'तीमे'इत्यादि, तासामुत्तरकुरूणां, सूत्रे एकवचनं प्राकृतत्वात्,

जीवा–उत्तरतो नीलवद्वर्षधरासन्ना कुरुचरमप्रदेशश्रेणिः पूर्वापरायता द्विधा पूर्वपश्चिमभागाभ्यां वक्षस्कारपर्वतं स्पृष्टा, एतदेव विवृणोति, तद्यथा–पौरस्त्यया कोट्या पौरस्त्यं वक्षस्कारपर्वतं माल्यवन्तं स्पृष्टा पाश्चात्यया पाश्चात्यं गन्धमादननामानं वक्षस्कारपर्वतं स्पृष्टा, त्रिपञ्चाशद्योजनसहस्राणि आयामेन, तत्कथमिति ?, उच्यते, मेरोः पूर्वस्यां दिशि भद्रशालवनमायामतो द्वाविंशतिर्योजनसहस्राणि एवं पश्चिमायामपि, उभयमीलने जातं चतुश्चत्वारिंशत्सहस्राणि मेरुविष्कम्भे दशसहस्रयोजनात्मके प्रक्षिप्ते जातं चतुष्पञ्चाशद्योजनसहस्राणि, एकैकस्य वक्षस्कारगिरेर्वर्षधरसमीपे पृथुत्वं पञ्च योजनशतानि ततो द्वयोर्वक्षस्कारगिर्योः पृथुत्वपरिमाणं योजनसहस्रं तत्पूर्वराशेरपनीयते, जातः पूर्वराशिस्त्रिपञ्चाशद्योजनसहस्राणीति । अथैतासां धनुःपृष्ठमाह––'तीसे णं धणुं दाहिणेण'मित्यादि, तासां धनुःपृष्ठं दक्षिणतो मेर्वासन्न इत्यर्थः, षष्टियोजनसहस्राणि चत्वारि च योजनशतानि अष्टादशानि–अष्टादशाधिकानि द्वादश चैकोनविंशतिभागान् योजनस्य परिक्षेपेण, तथाहि––एकैकवक्षस्कारगिरेरायामस्त्रिंशद्योजनसहस्राणि द्वे च नवोत्तरे षट् च कलाः, ततो द्वयोर्वक्षस्कारयोर्मीलने यथोक्तं मानमिति, अथैतासां स्वरूपप्ररूपणायाह––'उत्तरकुराए ण'मित्यादि, उत्तरकुरूणां भदन्त ! कीदृश आकारभावप्रत्यवतारः–स्वरूपाविर्भावः प्रज्ञप्तः ?, गौतम ! बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, एवमुक्तन्यायेन पूर्वं भरतप्रकरणे वर्णिता या एव सुषमसुषमायाः आधारकस्य वक्तव्यता सैव निरवशेषा नेतव्या,

कियत्पर्यन्तमित्याह—यावत्पद्मप्रकाराः पद्मगन्धादयो मनुष्यास्तावदिति ॥ उक्तोत्तरकुरुवक्तव्यताऽथ तद्वर्त्तिनौ यमकपर्वतौ प्ररूपयति—

कहि ण भन्ते! उत्तरकुराए जमगाणाम दुवे पव्वया पण्णत्ता ?, गोअमा! णीलवंतस्स वासहरपव्वयस्स दक्खिणिल्लाओ चरिमन्ताओ अट्ठजोअणसए चोत्तीसे चत्तारि अ सत्तभाए जोअणस्स अवाहाए सीआए महाणईए उभओ कूले एत्थ ण जमगाणाम दुवे पव्वया पण्णत्ता, जोअणसहस्सं उड्ढं उच्चत्तेण अड्ढाइज्जाइ जोअणसयाइ उव्वेहेण मूले एग जोअणसहस्स आयामविक्खम्भेण मज्झे अद्धट्ठमाणि जोअणसयाइ आयामविक्खम्भेण उवरिं पच जोअणसयाइ आयामविक्खम्भेण मूले तिण्णि जोअणसहस्साइं एग च वावट्ठ जोअणसय किंचिविसेसाहिअ परिक्खेवेण मज्झे दो जोअणसहस्साइ तिण्णि वावत्तरे जोअणसए किंचिविसेसाहिए परिक्खेवेण उवरि एग जोअणसहस्स पञ्च य एक्कासीए जोअणसए किंचिविसेसाहिए परिक्खेवेण मूले विच्छिण्णा मज्झे संखित्ता उप्पिं तणुआ जमगसंठाणसंठिआ सव्वकणगामया अच्छा सण्हा पत्तेअं २ पउमवरवेइआपरिक्खित्ता पत्तेअ २ वणसडपरिक्खित्ता, ताओ णं पउमवरवेइआओ दो गाऊआइं उद्ध उच्चत्तेणं पञ्च धणुसयाइ विक्खम्भेण, वेइआवणसण्डवण्णओ भाणिअव्वो, तेसि णं जमगपव्वयाणं उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते, जाव तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ ण दुवे पासायवडेंसगा प०, ते ण पासायवडेंसगा बावट्ठिं जोअणाइं अद्धजोअण च उद्ध उच्चत्तेणं इकतीस जोअणाइ कोस च आयामविक्खम्भेण पासायवण्णओ भाणिअव्वो, सीहासणा सपरिवारा जाव एत्थ ण जमगाणं देवाण सोलसण्ह आयरक्खदेवसाहस्सीणं सोलस भद्दासणसाहस्सीओ पण्णत्ताओ, से केणट्ठेण भन्ते!

एव वुच्चइ जमगा पव्वया २?, गोअमा! जमगपव्वएसु ण तत्थ २ देसे तहि २ बहवे खुड्डाखुड्डियासु वावीसु जाव विलपतियासु बहवे उप्पलाइं जाव जमगवण्णाभाइ जमगा य इत्थ दुवे देवा महिड्ढीया, ते ण तत्थ चउण्ह सामाणिअसाहस्सीण जाव भुञ्जमाणा विहरति, से तेणट्ठेण गो०! एव वुच्चइ—जमगपव्वया २, अदुत्तर च णं सासए णामधिज्जे जाव जमगपव्वया २। कहि ण भन्ते! जमगाणं देवाण जमिगाओ रायहाणीओ पण्णत्ताओ?, गोअमा! जम्बुद्दीवे दीवे मन्दरस्स पव्वयस्स उत्तरेणं अण्णंमि जम्बुद्दीवे २ वारस जोअणसहस्साइं ओगाहित्ता एत्थ ण जमगाण देवाणं जमिगाओ रायहाणीओ पण्णत्ताओ वारस जोअणसहस्साइं आयामविक्खम्भेण सत्तत्तीस जोअणसहस्साइ णव य अडयाले जोअणसए किंचिविसेसाहिए परिक्खेवेण, पत्तेअं २ पायारपरिक्खित्ता, ते ण पागारा सत्तत्तीस जोअणाइ अद्धजोअण च उद्ध उच्चत्तेण मूले अद्धत्तेरस जोअणाइ विक्खम्भेण मज्झे छ सकोसाइ जोअणाइ विक्खम्भेण उवरिं तिण्णि सअद्धकोसाइ जोअणाइ विक्खम्भेण मूले विच्छिण्णा मज्झे सखित्ता उप्पि तणुआ वाहिं वट्टा अतो चउरंसा सव्वरयणामया अच्छा, ते ण पागारा णाणामणिपञ्चवण्णेहिं कविसीसएहिं उवसोहिआ, तंजहा—किण्हेहिं जाव सुक्किल्लेहिं, ते ण कविसीसगा अद्धकोस आयामेण देसूण अद्धकोसं उद्धं उच्चत्तेण पञ्च धणुसयाइ वाहल्लेण सव्वमणिमया अच्छा, जमिगाणं रायहाणीण एगमेगाए वाहाए पणवीस पणवीस दारसय पण्णत्तं, ते ण दारा वावट्ठिं जोअणाइं अद्धजोअणं च उद्धं उच्चत्तेण इक्कतीस जोअणाइं कोस च विक्खम्भेणं तावइअं चेव पवेसेण, सेआ वरकणगथूभिआगा एव रायप्पसेणइज्जविमाणवत्तव्वयाए दारवण्णओ जाव अट्ठट्ठमंगलगाइंति, जमियाण रायहाणीणं चउद्दिसिं पञ्चपञ्च जोअणसए अवाहाए चत्तारि वणसण्डा पण्णत्ता, तंजहा—असोगवणे १ सत्तिवण्णवणे२ चंपगवणे३ चूअवणे४, ते णं वणसंडा साइरेगाइं वारसजोअण-

शेषान् परिक्षेपान् वक्तुं सूत्रचतुष्टयमाह—'जंबूए ण'मित्यादि, जम्ब्वाः सुदर्शनायाः उत्तरपूर्वस्या—ईशानकोणे उत्तरस्यामुत्तरपश्चिमायां—वायव्यकोणे अत्रान्तरे दिक्त्रयेऽपीत्यर्थः अनादृतनाम्नो—जम्बूद्वीपाधिपतेर्देवस्य चतुर्णां सामानिकसहस्राणां चत्वारि जम्बूसहस्राणि प्रज्ञप्तानि, 'तीसे ण'मित्यादि, कण्ठ्यं, गाथाबन्धेन पार्षद्यदेवजम्बूराह—'दक्खिण'इत्यादि, दक्षिणपौरस्त्ये—आग्नेयकोणे दक्षिणस्यां अपरदक्षिणस्यां—नैर्ऋतकोणे चः समुच्चये एतासु तिसृषु दिक्षु यथासंख्यं। अष्ट दश द्वादश जम्बूनां सहस्राणि भवन्ति, एवोऽवधारणे तेन नाधिकानि न न्यूनानीत्यर्थः, चः प्राग्वत्, अनीकाधिपजम्बूस्तृतीयपरिक्षेपजम्बूश्च गाथाबन्धेनाह—'अणिआहिवाण'इत्यादि, अनीकाधिपानां—गजादि-कटकाधीशानां सप्तानां सप्तैव जम्बूः पश्चिमायां भवन्ति, द्वितीयः परिक्षेपः पूर्णः॥ अथ तृतीयमाह—आत्मरक्षका-णामनादृतदेवसामानिकचतुर्गुणानां षोडशसहस्राणां जम्ब्वः एकैकदिक्षु चतुःसहस्रसद्भावात् षोडश सहस्राणि भवन्ति, यद्यपि चानयोः परिक्षेपयोर्जम्बूनामुच्चत्वादिप्रमाणं न पूर्वाचार्यैश्चिन्तितं तथापि पद्महृदपद्मपरिक्षेपन्यायेन पूर्वपूर्वपरिक्षेपजम्ब्वपेक्षयोत्तरोत्तरपरिक्षेपजम्ब्वोऽर्द्धमाना ज्ञातव्याः, अत्राप्येकैकस्मिन् परिक्षेपे एकैकस्यां पङ्क्तौ क्रियमाणायां क्षेत्रसाङ्कीर्ण्येनानवकाशदोषस्तथैवोद्भावनीयस्तेन परिक्षेपजातयस्तिस्रस्तथैव वाच्याः, सम्प्रत्यस्या एव वनत्रय-परिक्षेपान् वक्तुमाह—'जंबूए ण'मित्यादि, सा चैवंपरिवारेति गम्यं, त्रिभिः शतिकैः—योजनशतप्रमाणैर्वनखण्डैः सर्वतः सम्परिक्षिप्ताः, तद्यथा—अभ्यन्तरेण मध्यमेन बाह्येनेति, अथात्र यदस्ति तदाह—'जंबूए ण'मित्यादि, जम्ब्वाः सप-

रिवारायाः पूर्वेण पञ्चाशद्योजनानि प्रथमवनखण्डमवगाह्यात्रान्तरे भवनं प्रज्ञप्तं, क्रोशमायामेन, उच्चत्वादिकथनायातिदेशमाह—स एव मूलजम्बूपूर्वशाखागतभवनसम्बन्धी वर्णको ज्ञेयः, शयनीयं चानादृतयोग्यं, एवं शेषास्वपि दक्षिणादिदिक्षु स्वस्वदिशि पञ्चाशद्योजनान्यवगाह्याद्ये वने भवनानि वाच्यानि, अथात्र वने वापीस्वरूपमाह—'जंबूए णं उत्तरे'त्यादि, जम्ब्वाः उत्तरपौरस्त्ये दिग्भागे प्रथमं वनखण्डं पञ्चाशद्योजनान्यवगाह्यात्रान्तरे चतस्रः पुष्करिण्यः प्रज्ञप्ताः, एताश्च न सूचीश्रेण्या व्यवस्थिताः किन्तु स्वविदिग्गतप्रासादं परिक्षिप्य स्थिताः, तेन प्रादक्षिण्येन तन्नामान्येवं—पद्मा पूर्वस्यां पद्मप्रभा दक्षिणस्यां कुमुदा पश्चिमायां कुमुदप्रभा उत्तरस्यां, एवं दक्षिणपूर्वादिविदिग्गतवापीष्वपि वाच्यं, ताश्च क्रोशमायामेन अर्द्धक्रोशं विष्कम्भेन पञ्चधनुःशतान्युद्वेधेनेति । अथात्र वापीमध्यगतप्रासादस्वरूपमाह—'तासि ण'मित्यादि, तासां वापीना चतसृणा मध्ये प्रासादावतंसकाः प्रज्ञप्ताः, बहुवचनं च उक्तवक्ष्यमाणानां वापीनां प्रासादापेक्षया द्रष्टव्यं, तेन प्रतिवापीचतुष्कमेकैकप्रासादभावेन चत्वारः प्रासादाः, एवं निर्देशो लाघवार्थं, क्रोशमायामेनार्द्धक्रोशं विष्कम्भेन देशोनं क्रोशमुच्चत्वेन, वर्णको मूलजम्बूदक्षिणशाखागतप्रासादवद् ज्ञेयः, एषु चानादृतदेवस्य क्रीडार्थं सिंहासनानि सपरिवाराणि वाच्यानि, जीवाभिगमे त्वपरिवाराणि, एवं शेषासु दक्षिणपूर्वादिषु विदिक्षु वाप्यः प्रासादाश्च वक्तव्याः, एतासां नामदर्शनाय गाथाद्वयं, पद्मादयः प्रागुक्ताः पुनः पद्यबन्धबद्धत्वेन संगृहीता इति न पुनरुक्तिः, एताश्च सर्वा अपि सत्रिसोपानचतुर्द्वाराः पद्मवरवेदिकावनखण्डयुक्ताश्च बोध्याः, अथ दक्षिणपू-

र्वस्यां उत्पलगुल्मा पूर्वस्यां नलिना दक्षिणस्यां उत्पलोज्ज्वला पश्चिमायां उत्पला उत्तरस्यां तथा अपरदक्षिणस्यां भृङ्गा भृङ्गप्रभा अञ्जना कज्जलप्रभा तथा अपरोत्तरस्यां श्रीकान्ता श्रीमहिता श्रीचन्द्रा श्रीनिलया, चैवशब्दः प्राग्वत्, अथास्य वनस्य मध्यवर्त्तीनि कूटानि स्वरूपतो लक्षयति—'जंबूए णं'इत्यादि, जम्ब्वा अस्मिन्नेव प्रथमे वनखण्डे पौरस्त्यस्य भवनस्य उत्तरस्यां उत्तरपौरस्त्यस्य—ईशानकोणसत्कस्य प्रासादावतंसकस्य दक्षिणस्यां अत्रान्तरे कूटं प्रज्ञप्तं अष्टौ योजनान्यूर्ध्वोच्चत्वेन द्वे योजने उद्वेधेन, वृत्तत्वेन य एव आयामः स एव विष्कम्भ इति, मूलेऽष्ट योजनान्यायामविष्कम्भाभ्यां बहुमध्यदेशभागे, भूमितश्चतुर्षु योजनेषु गतेष्वित्यर्थः, षड् योजनान्यायामविष्कम्भाभ्यां, उपरि—शिखरभागे चत्वारि योजनान्यायामविष्कम्भाभ्यां, अथामीषां परिधिकथनाय पद्यमाह—'पणवीसे'त्यादिकं, सर्वं प्रथमपाठगतऋषभकूटाभिलापानुसारेण वाच्यं, नवरं पञ्चविंशतिं योजनानि सविशेषाणि किञ्चिदधिकानि मूले परिरय इत्यादि यथासंख्यं योज्यम्, जिनभद्रगणिक्षमाश्रमणैस्तु 'अट्ठुसहकूडसरिसा सव्वे जम्बूणयामया भणिआ' । इत्यस्यां गाथायामृषभकूटसमत्वेन भणितत्वात् द्वादश योजनानि अष्टौ मध्ये चैत्यूचे, तत्त्वं तु बहुश्रुतगम्यं, एषु च प्रत्येकं जिनगृहमेकैकं विडिमागतजिनगृहतुल्यमिति, अथ शेषकूटवक्तव्यतामतिदेशेनाह—'एवं सेसावि कूडा'इति, एवमुक्तरीत्या वर्णप्रमाणपरिध्याद्यपेक्षया शेषाण्यपि सप्त कूटानि बोध्यानि, स्थानविभागस्त्वयं तेषां, तथाहि—पूर्वदिग्भाविनो भवनस्य दक्षिणतो दक्षिणपूर्वदिग्भाविनः प्रासादावतंसकस्योत्तरतो द्वितीयं कूटं तथा दक्षिणदिग्भाविनो भवनस्य

पूर्वतो दक्षिणपूर्वदिग्भाविनः प्रासादावतंसकस्य पश्चिमायां तृतीयं तथा दक्षिणदिग्भाविनो भवनस्य पश्चिमायां दक्षिणापरदिग्भाविनः प्रासादावतंसकस्य पूर्वतश्चतुर्थं तथा पश्चिमदिग्भाविनो भवनस्य दक्षिणतो दक्षिणापरदिग्भाविनः प्रासादावतंसकस्योत्तरतः पञ्चमं तथा पश्चिमदिग्भाविनो भवनस्योत्तरतः उत्तरपश्चिमदिग्भाविनः प्रासादावतंसकस्य दक्षिणतः षष्ठं तथा उत्तरदिग्भाविनो भवनस्य पश्चिमायां उत्तरपश्चिमदिग्भाविनः प्रासादावतंसकस्य पूर्वतः सप्तमं तथा उत्तरदिग्भाविनो भवनस्य पूर्वतः उत्तरपूर्वदिग्भाविनः प्रासादावतंसकस्य अपरतोऽष्टममिति, अत्रैषां स्थापना यथा यन्त्रे तथा विलोकनीया, अथ जम्ब्वा नामोत्कीर्त्तनमाह–'जंबूए ण'मित्यादि, जम्ब्वाः सुदर्शनायाः द्वादश नामधेयानि प्रज्ञप्तानि, तद्यथा–सुष्ठु–शोभनं नयनमनसोरानन्दकत्वेन दर्शनं यस्याः सा तथा, अमोघा–सफला, इयं हि स्वस्वामिभावेन प्रतिपन्ना सती जम्बूद्वीपाधिपत्यं जनयति, तदन्तरेण तद्विषयस्य स्वामिभावस्यैवायोगात्, सुष्ठु–अतिशयेन प्रबुद्धा–उत्फुल्ला उत्फुल्लफुल्लयोगादियमप्युत्फुल्ला, सकलभुवनव्यापकं यशो धरतीति यशोधरा, 'लिहादित्वादच्,' जम्बूद्वीपो ह्यनया जम्ब्वा भुवनत्रयेऽपि विदितमहिमा ततः सम्पन्न यथोक्तयशोधारित्वमस्याः, विदेहेषु जम्बूः विदेहजम्बूर्विदेहान्तर्गतोत्तरकुरुकृतनिवासत्वात्, सौमनस्यहेतुत्वात् सौमनस्या, न हि तां पश्यतः कस्यापि मनो दुष्टं भवति, नियता सर्वकालमवस्थिता शाश्वतत्वात् नित्यमण्डिता सदा भूषणभूषितत्वात्, सुभद्रा–शोभनकल्याणभाजिनी, न ह्यस्याः कदाचिदुपद्रवसम्भवो महर्द्धिकेनाश्रितत्वात्, चः समुच्चये, विशाला–विस्तीर्णा, चः पूर्ववत्, आयामविष्कम्भाभ्यामु-

त्वेन नाष्टयोजनप्रमाणत्वात्, शोभनं जातं—जन्म यस्याः सा सुजाता, विशुद्धमणिकनकरत्नमूलद्रव्यजनिततया जन्मदोषरहितेति भावः, शोभनं मनो यस्याः सकाशाद्भवति सा सुमनाः, अपि चेति समुच्चये, अत्र जीवाभिगमादिषु विदेहजम्ब्वादीनां सुदर्शनादीनां च नाम्नां व्यत्यासेन पाठो दृश्यते तत्रापि न कश्चिद्विरोध इति, 'जंबूए णं अट्ठट्ठमंगलगा' इति व्यक्तं, उपलक्षणाद् ध्वजच्छत्रादिसूत्राणि वाच्यानीति, सम्प्रति सुदर्शनाशब्दप्रवृत्तिनिमित्तं पिपृच्छिषुरिदमाह—'से केणट्ठेण'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे गौतम ! जम्ब्वां सुदर्शनायामनादृतो नाम जम्बूद्वीपाधिपतिर्न आदृता—आदरविषयीकृताः शेषजम्बूद्वीपगता देवा येनात्मनोऽनन्यसदृशं महर्द्धिकत्वमीक्षमाणेन सोऽनादृत इति यथार्थनामा परिवसति, महर्द्धिक इत्यादि प्राग्वत्, स च चतुर्णां सामानिकसहस्राणां यावदात्मरक्षकसहस्राणां जम्बूद्वीपस्य जम्ब्वाः सुदर्शनायाः अनादृतनाम्न्या राजधान्या अन्येषां च बहूनां देवानां देवीनां चानादृताराजधानीवास्तव्यानामाधिपत्यं पालयन् यावद्विहरति, तदेतेनार्थेन एवमुच्यते—जंबूसुदर्शनेति, कोऽर्थः?—अनादृतदेवस्य सदृशमात्मनि महर्द्धिकत्वदर्शनमत्रकृतावासस्येति, सुष्ठु—शोभनमतिशयेन वा दर्शनं—विचारणमनन्तरोक्तस्वरूपं चिन्तनमितियावत् अनादृतदेवस्य यस्याः सकाशात् सा सुदर्शना इति, यद्यप्यनादृता राजधानीप्रश्नोत्तरसूत्रे सुदर्शनाशब्दप्रवृत्तिनिमित्तप्रश्नोत्तरसूत्रनिगमनसूत्रान्तर्गतं बहुष्वादर्शेषु दृष्टं तथापि 'से तेणट्ठेण'मित्यादि निगमनसूत्रमुत्तरसूत्रानन्तरमेव वाचनान्तरगामत्वामोहाय सूत्रपाठेऽस्माभिर्लिखितं व्याख्यातं च, उत्तरसूत्रानन्तरं निगमनसूत्रस्यैव यौक्ति-

कत्वादिति, अथापरं गौतम! यावच्छब्दाज्जम्ब्वाः सुदर्शनाया एतच्छाश्वतं नामधेयं प्रज्ञप्तं, यन्न कदाचिन्नासीदित्यादिकं ग्राह्यं, नाम्नः शाश्वतत्वं दर्शितम्, अथ प्रस्तुतवस्तुनः शाश्वतत्वमस्ति नवेत्याशङ्कां परिहरन्नाह—'जंबुसुदंसणा' इत्यादि, व्याख्याऽस्य प्राग्वत्, अथ प्रस्तावादस्य राजधानीं विवक्षुराह—'कहि णं भन्ते! अणाढिअस्स'इत्यादि, गतार्थं, नवरं यदेव प्राग्वर्णितं यमिकाराजधानीप्रमाणं तदेव नेतव्यं यावदनादृतदेवस्योपपातोऽभिषेकश्च निरवशेषो वक्तव्य इति शेषः ॥ अथोत्तरकुरुनामार्थं पिपृच्छिषुरिदमाह—

से केणट्ठेणं भन्ते! एव वुच्चइ उत्तरकुरा २?, गोअमा! उत्तरकुराए उत्तरकुरूणामं देवे परिवसइ महिद्धीए जाव पलिओवमट्ठिइए, से तेणट्ठेणं गोअमा! एवं वुच्चइ उत्तरकुरा २, अदुत्तरं च णति जाव सासए। कहि णं भन्ते! महाविदेहे वासे मालवंते णाम वक्खारपव्वए पण्णत्ते?, गो०! मदरस्स पव्वयस्स उत्तरपुरत्थिमेणं णीलवतस्स वासहरपव्वयस्स दाहिणेणं उत्तरकुराए पुरत्थिमेणं वच्छस्स चक्कवट्टिविजयस्स पच्चत्थिमेण एत्थ णं महाविदेहे वासे मालवते णाम वक्खारपव्वए पण्णत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे ज चेव गधमायणस्स पमाण विक्खम्भो अ णवरमिम णाणत्त सव्ववेरुलिआमए अवसिट्ठ तं चेव जाव गोअमा! नव कूडा पण्णत्ता, तंजहा—सिद्धाययणकूडे० सिद्धे य मालवन्ते उत्तरकुरु कच्छसागरे रयए। सीओय पुण्णभद्दे हरिस्सहे चेव बोद्धव्वे ॥ १ ॥ कहि णं भन्ते! मालवन्ते वक्खारपव्वए सिद्धाययणकूडे णामं कूडे पण्णत्ते?, गोअमा! मन्दरस्स पव्वयस्स उत्तरपुरत्थिमेण मालवंतस्स कूडस्स दाहिणपच्चत्थिमेण एत्थ णं सिद्धाययणे कूडे पण्णत्ते पच जोअणसयाइं उद्धं उच्चत्तेणं अवसिट्ठं तं चेव जाव

रायहाणी, एवं मालवन्तस्स कूडस्स उत्तरकुरुकूडस्स कच्छकूडस्स, एए चत्तारि कूडा दिसाहिं पमाणेहिं णेअव्वा, कूडसरिसणामया देवा, कहि णं भन्ते! मालवन्ते सागरकूडे नामं कूडे पण्णत्ते?, गोअमा! कच्छकूडस्स उत्तरपुरत्थिमेणं रययकूडस्स दक्खिणेणं एत्थ णं सागरकूडे णामं कूडे पण्णत्ते, पंच जोअणसयाइं उद्धं उच्चत्तेणं अवसिट्ठं तं चेव सुभोगा देवी रायहाणी उत्तरपुरत्थिमेणं रययकूडे भोगमालिणी देवी रायहाणी उत्तरपुरत्थिमेणं, अवसिट्ठा कूडा उत्तरदाहिणेण णेअव्वा एक्केणं पमाणेणं (सूत्रं ९१)

'से केणट्ठेण'मित्यादि, प्रतीतं, नवरं उत्तरकुरुनामाऽत्र देवः परिवसति, तेनेमा उत्तरकुरव इत्यर्थः, अथ यस्मादुत्तरकुरवः पश्चिमायामुक्तास्तं माल्यवन्तं नाम द्वितीयं गजदन्ताकारगिरिं प्ररूपयति—'कहि ण'मित्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे—गौतम! मन्दरस्य पर्वतस्य उत्तरपौरस्त्ये—ईशानकोणे नीलवतो वर्षधरपर्वतस्य दक्षिणस्यामुत्तरकुरूणां पूर्वस्यां कच्छनामकचक्रवर्त्तिविजयस्य पश्चिमायामत्रान्तरे महाविदेहेषु माल्यवन्नाम्ना वक्षस्कारपर्वतः प्रज्ञप्त इति शेषः, पूर्वदक्षिणयोरायतः पूर्वपश्चिमयोर्विस्तीर्ण', किं बहुना विस्तरेण?, यदेव गन्धमादनस्य पूर्वोक्तवक्षस्कारगिरेः प्रमाणं विष्कम्भश्च तदेव ज्ञातव्यमिति शेषः, नवरमिदं नानात्वं—अयं विशेषः, सर्वात्मना वैडूर्यरत्नमयः, अवशिष्टं तदेव, कियत्पर्यन्तमित्याह—'जाव'त्ति, सुलभं, नवरं उत्तरसूत्रे उक्तमपि सिद्धायतनकूटं यत्पुनरुच्यते 'सिद्धे य मालवन्ते' इति तद् गाथाबन्धेन सर्वसंग्रहायेति, सिद्धायतनकूटं चः पादपूरणे माल्यवत्कूटं प्रस्तुतवक्षस्काराधिपतिवासकूटं उत्तरकुरुकूटं—उत्तरकुरुदेवकूटं कच्छकूटं—कच्छविजयाधिपकूटं सागरकूटं रजतकूटं, इदं चान्यत्र रुचकमिति प्रसिद्धं, शीताकूटं—शी-

तासरित्सुरीकूटं, पदैकदेशे पदसमुदायोपचार इति सिद्धिः, चः समुच्चये, पूर्णभद्रनाम्नो व्यन्तरेशस्य कूटं पूर्णभद्रकूटम्, हरिस्सहनाम्न उत्तरश्रेणिपतिविद्युत्कुमारेन्द्रस्य कूटं हरिस्सहकूटं, चैवशब्दः पूर्ववत्, सम्प्रत्यमीषां स्थानप्ररूपणायाह— 'कहि ण'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे मन्दरस्य पर्वतस्य उत्तरपूर्वस्यां—ईशानकोणे प्रत्यासन्नमाल्यवत्कूटस्य दक्षिणपश्चिमायां नैर्ऋतकोणे, अत्र सिद्धायतनकूटं प्रज्ञप्तमिति गम्यं, पञ्च योजनशतान्यूर्ध्वोच्चत्वेन अवशिष्टं मूलविष्कम्भादिकं वक्तव्यं तदेव गन्धमादनसिद्धायतनकूटवदेव वाच्यं, यावद्राजधानी भणितव्या स्यात्, अयमर्थः—सिद्धायतनकूटवर्णके सामान्यतः कूटवर्णकसूत्रं विशेषतः सिद्धायतनादिवर्णकसूत्रं च द्वयमपि वाच्यं, तत्र सिद्धायतनकूटे राजधानीसूत्रं न सङ्गच्छते इति राजधानीसूत्रं विहाय तदधस्तनसूत्रं वाच्यमिति, अत्र यावच्छब्दो न संग्राहकः किन्त्ववधिमात्रसूचकः, यथा 'आसमुद्रक्षितीशाना'मित्यत्र समुद्रं विहाय क्षितीशत्वं वर्णितमिति, लाघवार्थमत्रातिदेशमाह— 'एवं मालवन्तस्स' इत्यादि, एवं सिद्धायतनकूटरीत्या माल्यवत्कूटस्य उत्तरकुरुकूटस्य कच्छकूटस्य वक्तव्यं, ज्ञेयमिति गम्यं, अथैतानि किं परस्परं स्थानादिना तुल्यानि उतातुल्यानीत्याह—एतानि सिद्धायतनकूटसहितानि चत्वारि परस्परं दिग्भिरीशानविदिग्रूपाभिः प्रमाणैश्च नेतव्यानि, तुल्यानीति शेषः, अयमर्थः—प्रथमं सिद्धायतनकूटं मेरोरुत्तरपूर्वस्या दिशि ततस्तस्य दिशि द्वितीयं माल्यवत्कूटं ततस्तस्यामेव दिशि तृतीयमुत्तरकुरुकूटं ततोऽप्यस्यां दिशि कच्छकूटं, एतानि चत्वार्यपि कूटानि विदिग्भावीनि मानतो हिमवत्कूटप्रमाणानीति, कूटसदृन्नामकाश्चात्र देवाः, अत्र 'यावत्स-

म्भवं विधिप्राप्ति'रिति न्यायात् सिद्धकूटवर्जेषु त्रिषु कूटेषु कूटनामका देवा इति बोध्यं, सिद्धायतनकूटे तु सिद्धायतनं, अन्यथा—"छमयरि कूडेसु तहा चूलाचउ वणतरूसु जिणभवणा। भणिआ जम्बुदीवे सदेवया सेस ठाणेसु॥१॥" इति क्षेत्रविचारे रत्नशेखरसूरिवचो विरोधमापद्येतेति, अथावशिष्टकूटस्वरूपमाह—'कहि णं'मित्यादि, प्रश्नसूत्रं सुगमम्, उत्तरसूत्रे कच्छकूटस्य चतुर्थस्योत्तरपूर्वस्यां रजतकूटस्य दक्षिणस्यामत्रान्तरे सागरकूटं नाम कूटं प्रज्ञप्तं, पञ्च योजनशतान्यूर्ध्वोच्चत्वेन अवशिष्टं मूलविष्कम्भादिकं तदेव, अत्र सुभोगानाम्नी दिक्कुमारी देवी अस्या राजधानी मेरोरुत्तरपूर्वस्यां, रजतकूटं षष्ठं पूर्वस्यामुत्तरस्यां अत्र भोगमालिनी दिक्कुमारी पुरी राजधानी उत्तरपूर्वस्यां, अवशिष्टानि शीताकूटादीनि उत्तरदक्षिणस्यां नेतव्यानि, कोऽर्थः?—पूर्वस्मात् २ उत्तरोत्तरमुत्तरस्यां २ उत्तरस्मादुत्तरस्मात्पूर्वं २ दक्षिणस्यां २ इत्यर्थः, एकेन तुल्येन प्रमाणेन सर्वेषामपि हिमवत्कूटप्रमाणत्वात् । अथ नवमं सहस्राङ्कमिति पृथग्निर्दिशन्नाह—

कहि णं भन्ते! मालवन्ते हरिस्सहकूडे णामं कूडे पण्णत्ते?, गोयमा! पुण्णभद्दस्स उत्तरेणं णीलवन्तस्स दक्खिणेणं एत्थ णं हरिस्सहकूडे णामं कूडे पण्णत्ते, एगं जोयणसहस्सं उद्धं उच्चत्तेणं जमगपमाणेणं णेअव्वं, रायहाणी उत्तरेणं असंखेज्जे दीवे अण्णंमि जम्बुद्दीवे दीवे उत्तरेणं बारस जोअणसहस्साइं ओगाहित्ता एत्थ णं हरिस्सहस्स देवस्स हरिस्सहाणामं रायहाणी पण्णत्ता, चउरासीइं जोअणसहस्साइं आयामविक्खम्भेणं बे जोअणसयसहस्साइं पण्णट्ठिं च सहस्साइं छच्च छत्तीसे जोअणसए परिक्खेवेणं सेसं जहा चमरचंचाए रायहाणीए तहा पमाणं भाणिअव्वं, महिद्धीए महज्जुईए, से केणट्ठेणं भन्ते! एवं वुच्चइ मालवन्ते वक्खार-

पव्वए २', गोअमा! मालवन्ते णं वक्खारपव्वए तत्थ तत्थ देसे तहिं २ बहवे सरिआगुम्मा णोमालिआगुम्मा जाव मगदन्तिआगुम्मा, ते णं गुम्मा दसद्धवण्णं कुसुमं कुसुमेंति, जे णं तं मालवन्तस्स वक्खारपव्वयस्स बहुसमरमणिज्जं भूमिभागं वायविधुअग्गसालामुक्कपुप्फपुंजोवयारकलिअं करेंति, मालवंते अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गोअमा! एवं वुच्चइ, अदुत्तरं च णं जाव णिच्चे ( सूत्र ९२ )

'कहि ण'मित्यादि, क्व भदन्त! माल्यवति वक्षस्कारगिरौ हरिस्सहकूटं नाम कूटं प्रज्ञप्तम्?, गौतम! पूर्णभद्रस्योत्तरस्यां नीलवतो वर्षधरपर्वतस्य दक्षिणस्यां अत्रान्तरे हरिस्सहकूटं नाम कूटं प्रज्ञप्तं, एकं योजनसहस्रमूर्ध्वोच्चत्वेन अवशिष्टं यमकगिरिप्रमाणेन नेतव्यं, तच्चेदम्—'अद्धाइज्जाइं जोअणसयाइं उव्वेहेणं मूले एगं जोअणसहस्सं आयामविक्खम्भेण'मित्यादि, आह परः—५०० योजनपृथुगजदन्ते १००० योजनपृथु इदं कथमिति, उच्यते, अनेन गजदन्तस्य ५०० योजनानि रुद्धानि ५०० योजनानि पुनर्गजदन्ताद्बहिराकाशे ततो न कश्चिद्दोष इति, अस्य चाधिपस्यापरराजधानीतो दिक्प्रमाणार्थविशेष इति तां विवक्षुराह—'रायहाणी'इत्यादि. राजधानी उत्तरस्यामिति, एतदेव विवृणोति—'असंखेज्जदीवे'त्तिपदं स्मारकं तेन 'मन्दरस्स पव्वयस्स उत्तरेणं तिरिअमसंखेज्जाइं दीवसमुद्दाइं वीईवइत्ता' इति ग्राह्यम्, अन्यस्मिन् जम्बूद्वीपे द्वीपे उत्तरस्यां द्वादशयोजनसहस्राण्यवगाह्य अत्रान्तरे हरिस्सहदेवस्य हरिस्सहनाम्नी राजधानी प्रज्ञप्ता चतुरशीतियोजनसहस्राण्यायामविष्कम्भाभ्यां द्वे योजनलक्षे पञ्चषष्टिं च योजनसहस्राणि

पद्‌ च द्वात्रिंशदधिकानि योजनशतानि परिक्षेपेण, शेषं यथा चमरचञ्चायाः—चमरेन्द्रराजधान्याः प्रमाणं भणितं भगवत्यङ्गे तथा प्रमाणं प्रासादादीनां भणितव्यमिति, 'महिड्डीए महज्जुईए' इति सूत्रेणास्य नामनिमित्तनिगमके प्रश्ननिर्वचने सूचिते, ते चैवं—'से केणट्ठेणं भन्ते! एवं वुच्चइ हरिस्सहकूडे २ ?, गोअमा! हरिस्सहकूडे बहवे उप्पलाइं पउमाइं हरिस्सहकूडप्पमाणाइं जाव हरिस्सहे णामं देवे अ इत्थ महिड्डीए जाव परिवसइ, से तेणट्ठेणं जाव अदुत्तरं च णं गोअमा! जाव सासए णामधेज्जे' इति, अथास्य वक्षस्कारस्य नामार्थं प्रश्नयति—'से केणट्ठेण'मित्यादि, प्रश्नार्थः प्राग्वत्, उत्तरसूत्रे गौतम! माल्यवति वक्षस्कारपर्वते तत्र तत्र देशे—स्थाने तस्मिन् तस्मिन् प्रदेशे—देशैकदेशे इत्यर्थः बहवः सरिकागुल्माः नवमालिकागुल्माः यावन्मगदन्तिकागुल्माः सन्तीति शेषः, ते गुल्माः क्षेत्रानुभावतः सदैव पञ्चवर्णं कुसुमं कुसुमयन्ति—जनयन्ति इत्यर्थः, ते गुल्मास्तं माल्यवतो वक्षस्कारपर्वतस्य बहुसमरमणीयं भूमिभागं वातविधुताग्रशालामुक्तपुष्पपुञ्जोपचारकलितं कुर्वन्ति, एतदर्थः प्राग्वत्, ततो माल्यं—पुष्पं नित्यमस्यास्तीति माल्यवान्, माल्यवन्नामा देवश्चात्र महर्द्धिको यावत्पल्योपमस्थितिकः तेन तद्योगादयमपि माल्यवान्, 'अदुत्तरं चे'त्यादि, प्राग्वत् ॥

इह द्विविधा विदेहाः, तद्यथा—पूर्वविदेहा अपरविदेहाश्च, तत्र ये मेरोः प्राक् ते पूर्वविदेहाः ते च शीतया महानद्या दक्षिणोत्तरभागाभ्यां द्विधा विभक्ताः, एवं ये मेरोः पश्चिमायां ते अपरविदेहास्तेऽपि तथैव शीतोदया द्विधा विभक्ताः, एवं विदेहाना चत्वारो भागाः दर्शिता., तन्मध्ये कच्छादिविजयवक्षस्कारादिव्यवस्थालापकार्थं पिण्डार्थगत्या

सूत्रकृद्दर्शयिष्यमाणरीत्या बोधनीयानां दुर्बोधा इति विस्तरतो निरूप्यते, तत्रैकैकस्मिन् भागे यथायोगं माल्यवदा-देर्गजदन्ताकारवक्षस्कारगिरेः समीपे एको विजयः तथा चत्वारः सरलवक्षस्कारास्तिस्रश्चान्तर्नद्यः, एषां सप्तानां वस्तूनामन्तराणि षट्, सर्वत्राप्यन्तराणि रूपोनानि भवन्ति तथाऽत्र, प्रतीतमेतच्चतसृणामङ्गुलीनामप्यन्तरालानि त्रीणीति, ततोऽन्तरे २ एकैकसद्भावात् षड् विजयाः, एते चत्वारो वक्षस्कारादय एकैकान्तरनद्याऽन्तरितास्ततश्चतुर्णामन्त्रीणामन्तरे सम्भवत्यन्तरनदीत्रयमिति व्यवस्था स्वयमवगमातव्या, तथा वनमुखमप्यङ्गीकृत्यैको विजय इति प्रतिविभागं सिद्धा अष्टौ विजयाः चत्वारो वक्षस्कारास्तिस्रोऽन्तरनद्यो वनमुखं चैकमिति, इयमत्र भावना—पूर्वविदेहेषु माल्यवतो गजदन्तपर्वतस्य पूर्वतः शीताया उत्तरत एको विजयः, ततः पूर्वस्यां प्रथमो वक्षस्कारः ततोऽपि पूर्वस्यां द्वितीयो विजयः ततोऽपि पूर्वस्यां प्रथमान्तरनदी, अनेन क्रमेण तृतीयो विजयः द्वितीयो वक्षस्कारः चतुर्थो विजयः द्वितीयान्तरनदी पञ्चमो विजयः तृतीयो वक्षस्कारः षष्ठो विजयः तृतीयान्तरनदी सप्तमो विजयः चतुर्थो वक्षस्कारः अष्टमो विजयः ततश्चैकं वनमुखं जगत्यासन्नं, एवं शीताया दक्षिणतोऽपि सौमनसगजदन्तपर्वतस्य पूर्वतोऽयमेव विजयादिक्रमो वाच्यः, तथा पश्चिमविदेहेषु शीतोदाया दक्षिणतो विद्युत्प्रभस्य पश्चिमतोऽप्ययमेव क्रमः, तथा शीतोदाया उत्तरतोऽपि गन्धमादनस्य पश्चिमत इति । अथ प्रादक्षिण्येन निरूपणेऽयमेव हि आद्य इति, प्रथमविभागमुखे कच्छविजयं विवक्षुराह—

कच्छविजयस्स उत्तरेण उत्तरद्धकच्छस्स दाहिणेणं चित्तकूडस्स पच्चत्थिमेणं मालवन्तस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं कच्छे विजए वेअद्धे णामं पव्वए पण्णत्ते, तंजहा—पाईणपडीणायए उदीणदाहिणविच्छिण्णे दुहा वक्खारपव्वए पुट्ठे—पुरत्थिमिल्लाए कोडीए जाव दोहिवि पुट्ठे भरहवेअद्धसरिसए णवरं दो बाहाओ जीवा धणुपट्ठं च ण कायव्वं, विजयविक्खम्भसरिसे आयामेणं, विक्खम्भो उच्चत्तं उव्वेहो तहेव च विज्जाहरआभिओगसेढीओ तहेव, णवरं पणपण्णं २ विज्जाहरणगरावासा प०, आभिओगसेढीए उत्तरिल्लाओ सेढीओ सीआए ईसाणस्स सेसाओ सक्कस्सत्ति, कूडा—'सिद्धे १ कच्छे २ खंडग ३ माणी ४ वेअद्ध ५ पुण्ण ६ तिमिसगुहा ७। कच्छे ८ वेसमणे वा ९ वेअद्धे होंति कूडाइं ॥ १ ॥ कहि णं भन्ते! जम्बुद्दीवे २ महाविदेहे वासे उत्तरद्धकच्छे णामं विजए पण्णत्ते?, गोयमा! वेयद्धस्स पव्वयस्स उत्तरेणं णीलवन्तस्स वासहरपव्वयस्स दाहिणेणं मालवन्तस्स वक्खारपव्वयस्स पुरत्थिमेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे जाव सिज्झन्ति, तहेव णेअव्वं सव्वं कहि णं भन्ते! जम्बुद्दीवे दीवे महाविदेहे वासे उत्तरद्धकच्छे विजए सिंधुकुंडे णामं कुंडे पण्णत्ते?, गोयमा! मालवन्तस्स वक्खारपव्वयस्स पुरत्थिमेणं उसभकूडस्स पच्चत्थिमेणं णीलवन्तस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे उत्तरद्धकच्छविजए सिंधुकुंडे णामं कुंडे पण्णत्ते, सट्ठिं जोअणाणि आयामविक्खम्भेणं जाव भवणं अट्ठो रायहाणी अ णेअव्वा, भरहसिंधुकुंडसरिसं सव्वं णेअव्वं, जाव तस्स णं सिंधुकुण्डस्स दाहिणिल्लेणं तोरणेणं सिंधुमहाणई पवूढा समाणी उत्तरद्धकच्छविजयं एज्जेमाणी २ सत्तहिं सलिलासहस्सेहिं आपूरेमाणी २ अहे तिमिसगुहाए वेअद्धपव्वयं दालयित्ता दाहिणकच्छविजयं एज्जेमाणी २ चोद्दसहिं सलिलासहस्सेहिं समग्गा दाहिणेणं सीअं महाणइं समप्पेइ, सिंधुमहाणई पवहे अ मूले अ भरहसिंधुसरिसा पमाणेणं

प्रशस्तः, सर्वात्मना विजेतव्यश्चक्रवर्त्तिनामिति विजयः अनादिप्रवाहनिपतितेयं संज्ञा तेनेदमन्वर्थमात्रदर्शनं न तु साक्षात्प्रवृत्तिनिमित्तोपदर्शनमिति, उत्तरदक्षिणाभ्यामायतः पूर्वापरविस्तीर्णः पल्यङ्कसंस्थानसंस्थितः आयतचतुरस्र-त्वात्, गङ्गासिन्धुभ्यां महानदीभ्यां वैताढ्येन च पर्वतेन षड्भागप्रविभक्तः षट्खण्डीकृत इत्यर्थः, एवमन्येऽपि विजया भाव्याः, परं शीताया उदीच्याः कच्छादयः शीतोदाया याम्याः पक्ष्मादयो गङ्गासिन्धुभ्यां षोढा कृताः, शीताया याम्या वच्छादयः शीतोदाया उदीच्या वप्रादयो रक्तारक्तवतीभ्यामिति, उत्तरदक्षिणायतेति विवृणोति–षोडश योजनसहस्राणि पञ्चयोजनशतानि द्विनवत्यधिकानि द्वौ चैकोनविंशतिभागौ योजनस्यायामेन, अत्रोपपत्तिर्यथा–विदेहविस्तारात् योजन ३३६८४ कला ४ रूपात् शीतायाः शीतोदाया वा विष्कम्भो योजन ५०० रूपः शोध्यते, शेषस्यार्द्धे लभ्यते यथोक्तं मानं, इह यद्यपि शीतायाः शीतोदाया वा समुद्रप्रवेशे एव पञ्चशतयो-जनप्रमाणो विष्कम्भोऽन्यत्र तु हीनो हीनतरस्तथापि कच्छादिविजयसमीपे उभयकूलवर्त्तिनो रमणप्रदेशावधिकृत्य पञ्चयोजनशतप्रमाणो विष्कम्भः प्राप्यत इति, प्राचीनप्रतीचीनेति विवृणोति–द्वे योजनसहस्रे द्वे च योजनशते त्रयो-दशोत्तरे किञ्चिदूने, अत्राप्युपपत्तिर्यथा–इह महाविदेहेषु देवकुरूत्तरकुरुमेरुभद्रशालवनवक्षस्कारपर्वतान्तरनदीवनमु-खव्यतिरेकेणान्यत्र सर्वेऽपि विजयाः, ते च पूर्वापरविस्तृतास्तुल्यविस्ताराः, तत्रैकस्मिन् दक्षिणभागे उत्तरभागे वाऽष्टौ वक्षस्कारगिरयः, एकैकस्य पृथुत्वं पंचयोजनशतानि, सर्ववक्षस्कारपृथुत्वमीलने चत्वारि योजनसहस्राणि, अन्तरनद्य

यद् एकैकस्यान्तरनद्या विष्कम्भः पञ्चविंशं योजनशतं ततः सर्वान्तरनदीपृथुत्वमीलने जातानि सप्त शतानि पञ्चाशदधिकानि ७५०, द्वे च वनमुखे एकैकस्य वनमुखस्य पृथुत्वमेकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२, उभयपृथुत्वमीलने जातानि अष्टपञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, मेरुपृथुत्वं दशसहस्राणि १००००, पूर्वापरभद्रशालवनयोरायामश्चतुश्चत्वारिंशत्सहस्राणि ४४०००, सर्वमीलने जातानि चतुःषष्टिसहस्राणि पञ्चशतानि चतुर्नवत्यधिकानि ६४५९४, एतज्जम्बूद्वीपविस्तारात् शोध्यते, शोधिते च सति जातं शेषं पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, एकैकस्मिंश्च दक्षिणे उत्तरे वा भागे विजयाः षोडश, ततः षोडशभिर्भागे हृते लब्धानि द्वाविंशतिशतानि किञ्चिन्न्यूनत्रयोदशाधिकानि २२१३, त्रयोदशस्य योजनस्य षोडशचतुर्दशभागात्मकत्वात्, एतावानेकैकस्य विजयस्य विष्कम्भः। अयं च भरतवद्वैताढ्येन द्विधाकृत इति तत्र तं विवक्षुराह—'कच्छस्स णं'मित्यादि, कच्छस्य विजयस्य बहुमध्यदेशभागे वैताढ्यः पर्वतः प्रज्ञप्तः, यः कच्छं विजयं द्विधा विभजंस्तिष्ठति, तद्यथा—दक्षिणार्द्धकच्छं चोत्तरार्द्धकच्छं च, चशब्दौ उभयोस्तुल्यकक्षताद्योतनार्थौ। दक्षिणार्द्धकच्छं स्थानतः पृच्छति—'कहि णं–'मित्यादि, क्व भदन्त! जम्बूद्वीपे द्वीपे महाविदेहनाम्नि वर्षे दक्षिणार्द्धकच्छो नाम विजयः प्रज्ञप्तः?, गौतम! वैताढ्यपर्वतस्य दक्षिणस्याः शीतायाः महानद्या उत्तरस्यां चित्रकूटस्य वक्षस्कारपर्वतस्य पश्चिमायां माल्यवतो वक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे द्वीपे यावद् दक्षिणार्द्धकच्छो नाम विजयः प्रज्ञप्तः, उत्तरेत्यादिविशेषणद्वयं प्राग्वद् बोध्यं,

अष्टौ योजनसहस्राणि द्वे च एकसप्तत्युत्तरे योजनशते एकं चैकोनविंशतिभागं योजनस्यायामेन, एतदङ्कोत्पत्तिश्च षोडशसहस्रपञ्चशतद्विनवतियोजनकलाद्वयरूपात् कच्छविजयमानात् पंचाशद्योजनप्रमाणे वैताढ्यव्यासे(ऽपनीते ततोऽ)-र्द्धीकृते भवति, शेषं प्राग्वद् अयं च कर्मभूमिरूपोऽकर्मभूमिरूपो वेति निर्णेतुमाह—'दाहिणद्ध'इत्यादि, दक्षिणार्द्ध-भरतप्रकरण इवेदं निर्विशेषं व्याख्येयं, अत्र मनुजस्वरूपं पृच्छति—'दाहिण'इत्यादि, कण्ठ्यं, अथास्य सीमाकारिणं वैताढ्य इति नाम्ना प्रतीतं गिरिं स्थानतः पृच्छति—'कहि ण'मित्यादि, स्पष्टं, नवरं द्विधा वक्षस्कारपर्वतौ—माल्यवच्चित्रकूटवक्षस्कारौ स्पृष्टः, इदमेव समर्थयति—पूर्वया कोट्या यावत्करणात् 'पुरत्थिमिल्लं वक्खारपव्वयं पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं वक्खारपव्वयं'इति बोध्यं, तेन पौरस्त्यं वक्षस्कारं—चित्रकूटं नामानं पाश्चात्यया कोट्या पाश्चात्यं वक्षस्कारं—माल्यवन्तं, अत एव द्वाभ्यां कोटिभ्यां स्पृष्टः, भरतवैताढ्यसदृशकः रजतमयत्वात् रुचकसंस्थानसंस्थितत्वाच्च, नवरं द्वे बाहे जीवा धनुःपृष्ठं च न कर्त्तव्यमवक्रक्षेत्रवर्त्तित्वात्, लम्बभागश्च न भरतवैताढ्यसदृश इत्याह—विजयस्य कच्छादेर्यो विष्कम्भः—किंचिदूनत्रयोदशाधिकद्वाविंशतिशतयोजनरूपस्तेन सदृश आयामेन, कोऽर्थः?—विजयस्य यो विष्कम्भभागः सोऽस्यायामविभाग इति, विष्कम्भः—पंचाशद्योजनरूपः, उच्चत्वं—पंचविंशतियोजनरूपं उद्वेधः—पंचविंशतिक्रोशात्मकस्तथैव—भरतवैताढ्यवदेवेत्यर्थः, उच्चत्वस्य प्रथमदशयोजनातिक्रमे विद्याधरश्रेण्यौ तथैव, नवरमिति विशेषः पंचपंचाशत् २ विद्याधरनगरावासाः प्रज्ञप्ताः, एकैकस्या श्रेणौ—दक्षिणश्रेणौ उत्तरश्रेणौ वा, भरतवैताढ्ये तु

दक्षिणतः पञ्चाशदुत्तरतस्तु षष्टिर्नगराणीति भेदः, आभियोग्यश्रेणी तथैवेति गम्यं, कोऽर्थः?—विद्याधरश्रेणिभ्यामूर्ध्व-
दशयोजनातिक्रमे दक्षिणोत्तरभेदेन द्वे भवतः, अत्राधिकारात् सर्ववैताढ्याभियोग्यश्रेणिविशेषमाह—उत्तरदिक्स्थाः
आभियोग्यश्रेणयः शीताया महानद्या ईशानस्य—द्वितीयकल्पेन्द्रस्य शेषाः—शीतादक्षिणस्थाः शक्रस्य—आद्यकल्पेन्द्रस्य,
किमुक्तं भवति?—शीताया उत्तरदिशि ये विजयवैताढ्यास्तेषु या आभियोग्यश्रेणयो दक्षिणगा वा उत्तरगा वा ताः
सर्वाः सौधर्मेन्द्रस्येति, बहुवचनं चात्र विजयवर्तिसर्ववैताढ्यश्रेण्यपेक्षया द्रष्टव्यं, अथ कूटानि वक्तव्यानीति तदुद्दे-
शमाह—'कूडा' इति, व्यक्तम्, अथ तन्नामान्याह—'सिद्धे' इत्यादि, पूर्वस्यां प्रथमं सिद्धायतनकूटं, ततः पश्चिमदिगभि-
मुखेनाष्टावपि कूटानि वाच्यानि, तद्यथा—द्वितीयं दक्षिणकच्छार्द्धकूटं, तृतीयं खण्डप्रपातगुहाकूटं चतुर्थं
माणीति पदैकदेशे पदसमुदायोपचारात् माणिभद्रकूटं शेषं व्यक्तं, परं विजयवैताढ्येषु सर्वेष्वपि द्वितीयाष्टमकूटे
स्वस्वविजयार्द्धविजयसदृशनामके यथा द्वितीयं दक्षिणकच्छार्द्धकूटं अष्टममुत्तरकच्छार्द्धकूटं इतराणि भरतवैताढ्य-
कूटसमनामकानीति। अथोत्तरार्द्धकच्छं प्रश्नयति—'कहि णं'मित्यादि, व्यक्तं, तथैव दक्षिणार्द्धकच्छावत् ज्ञेयं यावत्सि-
द्ध्यन्तीति. अथैतद्वर्त्तिसिन्धुकुण्डं वक्तव्यमित्याह—'कहि णं'मित्यादि, व्यक्तं, परं नितम्बः—कटकः, लाघवार्थमति-
देशमाह—'भरहसिन्धुकुण्डसरिसं सव्वं णेअव्वं' इत्यादि, सर्वं गतार्थं, गतागमेन व्याख्यातत्वात्, तथैव ऋषभकू-
टवक्तव्यमाह—'कहि णं'मित्यादि, प्राग्वत्, अथ गङ्गाकुण्डप्रस्तावनार्थमाह—'कहि णं'मित्यादि, सिन्धुकुण्डगमो निर्वि-

शेषः सर्वोऽपि वाच्यः, परं ततो गङ्गानदी खण्डप्रपातगुहाया अधो वैताढ्यं विभिद्य दक्षिणे भागे शीतां समुपसर्पतीति, ननु भरते नदीमुख्यत्वेन गङ्गामुपवर्ण्य सिन्धुरुपवर्णिता इह तु सिन्धुरुपवर्ण्य मा वर्ण्यते इति कथं व्यत्ययः?, उच्यते, इह माल्यवद्वक्षस्कारतो विजयप्ररूपणायाः प्रक्रान्तत्वेन तदासन्नत्वात् सिन्धुकुण्डस्य प्रथमं सिन्धुप्ररूपणा ततो गङ्गाया इति । अथ केनार्थेन भदन्त! एवमुच्यते कच्छो विजयः कच्छो विजयः?, गौतम! कच्छे विजये वैताढ्यस्य दक्षिणस्यां शीताया महानद्या उत्तरस्यां गङ्गायाः महानद्याः पश्चिमायां सिन्धोर्महानद्याः पूर्वस्यां दक्षिणार्द्धकच्छविजयस्य बहुमध्यदेशभागे—मध्यखण्डेऽत्रान्तरे क्षेमानाम्ना राजधानी प्रज्ञप्ता, विनीताराजधानीसदृशी भणितव्या, विनीतावर्णकः सर्वोऽप्यत्र वाच्य इत्यर्थः, तत्र क्षेमायां राजधान्यां कच्छो नाम—राजा चक्रवर्त्ती समुत्पद्यते, कोऽर्थः?—यस्तत्र षट्खण्डभोक्ता समुत्पद्यते स तत्र लोकैः 'कच्छ' इति व्यवह्रियते, अत्र वर्त्तमाननिर्देशेन सर्वदापि यथासम्भवं चक्रवर्त्युत्पत्तिः सूचिता, न तु भरत इव चक्रवर्त्युत्पत्तौ कालनियम इति, 'महयाहिमवन्ते'त्यादिकः सर्वो ग्रन्थो वाच्यः यावत्सर्वं भरतस्य क्षेत्रस्य ओअवणमिति—साधनं स्वायत्तीकरणं भरतस्य चक्रिण इति शेषः, निष्क्रमणं—प्रव्रज्याप्रातपत्तिस्तद्वर्जं भणितव्यं, भरतचक्रिणा सर्वविरतिर्गृहीता कच्छचक्रिणस्तु तद्ग्रहणेऽनियम इति, कियत्पर्यन्तमित्याह—यावद् भुङ्क्ते मानुष्यकानि सुखानि, अथवा कच्छनामधेयश्चात्र कच्छे विजये देवः पल्योपमस्थितिकः परिवसति तेनार्थेन गौतम! एवमुच्यते—कच्छराजस्वामिकत्वात् कच्छदेवाधिष्ठितत्वाच्च कच्छविजयः २ इति, यावन्नित्य इत्यन्त-

स्काराणां च तुल्यायामत्वात्, तेन तत्करणं प्राग्वदेव, विष्कम्भे तु पञ्च योजनशतानीति विशेषस्तेन, ननु तानि कथमिति, उच्यते, जम्बूद्वीपपरिमाणविष्कम्भात् षण्णवतिसहस्रेषु शोधितेषु अवशिष्टानि चत्वारि सहस्राणि एकस्मिन् दक्षिणभागे उत्तरे वाऽष्टौ वक्षस्कारगिरयस्ततोऽष्टभिर्विभज्यन्ते, ततः समायाते वक्षस्काराणां प्रत्येकं पूर्वोक्तो विष्कम्भः, इह हि विदेहेषु विजयान्तरनदीमुखवनमेर्वादिव्यतिरेकेणान्यत्र सर्वत्र वक्षस्कारगिरयस्ते पूर्वापरविस्तृताः सर्वत्र तुल्यविस्तारास्ततोऽस्य करणस्यावकाशः, तत्र विजयषोडशकपृथुत्वं पंचत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, अन्तरनदीषट्कपृथुत्वं सप्त शतानि पंचाशदधिकानि ७५० मेरुविष्कम्भपूर्वापरभद्रशालवनायामपरिमाणं चतुःपंचाशत्सहस्राणि ५४००० मुखवनद्वयपृथुत्वमष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, सर्वमीलने जातानि षण्णवतिसहस्राणि ९६००० इति, तथा नीलवद्वर्षधरपर्वतसमीपे चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतशतानि उद्वेधेन तदनन्तरं च मात्रया २–क्रमेण २ उत्सेधोद्वेधपरिवृद्ध्या परिवर्द्धमानः २, यत्र यावदुच्चत्वं तत्र तच्चतुर्थभाग उद्वेध इति द्वाभ्यां प्रकाराभ्यामधिकतरोऽभवदित्यर्थः, शीतामहानद्यन्ते पंचयोजनशतान्यूर्ध्वोच्चत्वेन पंचगव्यूतशतान्युद्वेधेन, अत एवाश्वस्कन्धसंस्थानसंस्थितः प्रथमतोऽतुङ्गत्वात् क्रमेणान्ते तुङ्गत्वात्, सर्वरत्नमयः, शेषं प्राग्वत्। अथास्य शिखरसौभाग्यमावेदयति—'चित्तकूडस्स णं'मित्यादि, व्यक्तं, अथात्र कूटसङ्ख्यार्थं पृच्छति–'चित्तकूडे'इत्यादि, पदयोजना सुलभा, भावार्थस्त्वयम्–परस्परमेतानि चत्वार्यपि कूटानि उत्तरदक्षिणभावेन समानि–तुल्यानीत्यर्थः, तथाहि–प्रथमं

सिद्धायतनकूटं द्वितीयस्य चित्रकूटस्य दक्षिणस्यां चित्रकूटं च सिद्धायतनकूटस्योत्तरस्यां, एवं प्राक्तनं प्राक्तनं अग्रेतनात् अग्रेतनाद्दक्षिणस्या अग्रेतनमग्रेतनं प्राक्तनात् २ उत्तरस्यां ज्ञेयं, तर्हि शीतानीलवतोः कस्यां दिशि इमानीत्याह—प्रथमकं शीताया उत्तरतः चतुर्थकं नीलवतो वर्षधरपर्वतस्य दक्षिणत इति, सूत्रपाठोक्तक्रमबलात् द्वितीयं चित्रनामकं प्रथमादनन्तरं ज्ञेयं, तृतीयं कच्छनामकं चतुर्थादर्वाक् ज्ञेयमिति, चित्रकूटादिषु वक्षस्कारेष्वेवं कूटनामनिवेशो पूर्वेषां सम्प्रदायः—आद्यं सिद्धायतनकूटं महानदीसमीपतो गण्यमानत्वात् द्वितीयं स्ववक्षस्कारनामकं तृतीयं पाश्चात्यविजयनामकं चतुर्थं प्राच्यविजयनामकमिति, अथास्य नामार्थं प्ररूपयति—'एत्थ ण'मित्यादि, अत्र चित्रकूटनामा देवः परिवसति तद्योगाच्चित्रकूट इति नाम, अस्य राजधानी मेरोरुत्तरतः शीताया उत्तरदिग्भाविवक्षस्काराधिपतित्वात्, एवमग्रेतनेष्वपि वक्षस्कारेषु यथासम्भवं वाच्यमिति ॥ गतः प्रथमो वक्षस्कारः, अधुना द्वितीयविजयप्रश्नावसरः—

कहि णं भंते! जम्बुद्दीवे दीवे महाविदेहे वासे सुकच्छे णामं विजए पण्णत्ते?, गोयमा! सीआए महाणईए उत्तरेणं णीलवंतस्स वासहरपव्वयस्स दाहिणेणं गाहावईए महाणईए पच्चत्थिमेणं चित्तकूडस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे सुकच्छे णामं विजए पण्णत्ते, उत्तरदाहिणायए जहेव कच्छे विजए तहेव सुकच्छे विजए, णवरं खेमपुरा रायहाणी सुकच्छे राया समुप्पज्जइ तहेव सव्वं। कहि णं भंते! जम्बुद्दीवे २ महाविदेहे वासे गाहावइकुंडे पण्णत्ते?, गो० सुकच्छविजयस्स पुरत्थिमेणं महाकच्छस्स विजयस्स पच्चत्थिमेणं णीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे एत्थ णं जम्बु-

दीवे दीवे महाविदेहे वासे गाहावइकुंडे णामं कुण्डे पण्णत्ते, जहेव रोहिअंसाकुण्डे तहेव जाव गाहावइदीवे भवणे, तस्स णं गाहावइस्स कुण्डस्स दाहिणिल्लेण तोरणेण गाहावई महाणई पवूढा समाणी सुकच्छमहाकच्छविजए दुहा विभयमाणी २ अट्ठावीसाए सलिलासहस्सेहिं समग्गा दाहिणेणं सीअं महाणइं समप्पेइ, गाहावई णं महाणई पवहे अ मुहे अ सव्वत्थ समा पणवीसं जोअणसयं विक्खम्भेणं अद्धाइज्जाइं जोअणाइं उव्वेहेणं उभओ पासिं दोहि अ पउमवरवेइआहिं दोहि अ वणसण्डेहिं जाव दुण्हवि वण्णओ इति। कहि णं भन्ते! महाविदेहे वासे महाकच्छे णामं विजए पण्णत्ते?, गोअमा! णीलवन्तस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेण पम्हकूडस्स वक्खारपव्वयस्स पच्चत्थिमेण गाहावईए महाणईए पुरत्थिमेणं एत्थ णं महाविदेहे वासे महाकच्छे णामं विजए पण्णत्ते, सेसं जहा कच्छविजयस्स जाव महाकच्छे इत्थ देवे महिद्धीए अट्ठो अ भाणिअव्वो। कहि णं भन्ते! महाविदेहे वासे पम्हकूडे णामं वक्खारपव्वए पण्णत्ते?, गोअमा! णीलवन्तस्स दक्खिणेणं सीआए महाणईए उत्तरेणं महाकच्छस्स पुरत्थिमेणं कच्छावईए पच्चत्थिमेणं एत्थ णं महाविदेहे वासे पम्हकूडे णामं वक्खारपव्वए पण्णत्ते, उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा चित्तकूडस्स जाव आसयन्ति, पम्हकूडे चत्तारि कूडा पं० तं०—सिद्धायणकूडे पम्हकूडे महाकच्छकूडे कच्छावइकूडे एवं जाव अट्ठो, पम्हकूडे इत्थ देवे महद्धिए पलिओवमट्ठिईए परिवसइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ। कहि णं भन्ते! महाविदेहे वासे कच्छगावती णामं विजए पं० ?, गो०! णीलवन्तस्स दाहिणेणं सीआए महाणईए उत्तरेण दहावतीए महाणईए पच्चत्थिमेण पम्हकूडस्स पुरत्थिमेणं एत्थ णं महाविदेहे वासे कच्छगावती णामं विजए पं० उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा कच्छस्स विजयस्स जाव कच्छगावई अ इत्थ देवे, कहि णं भन्ते! महाविदेहे वासे

वई जाव कुण्डे पण्णत्ते तं चेव गाहावइकुण्डप्पमाणं जाव मंगलावत्तपुक्खलावत्तविजये दुहा विभयमाणी २ अवसेसं तं चेव जं चेव गाहा-वईए । कहि णं भन्ते ! महाविदेहे वासे पुक्खलावत्ते णामं विजए पण्णत्ते ?, गोयमा ! णीलवन्तस्स दाहिणेणं सीआए उत्तरेणं पंकावईए पुरत्थिमेणं एगसेलस्स वक्खारपव्वयस्स पच्चत्थिमेणं, एत्थ णं पुक्खलावत्ते णामं विजए पण्णत्ते जहा कच्छविजए तहा भाणिअव्वं जाव पुक्खले अ इत्थ देवे महिड्ढिए पलिओवमट्ठिइए परिवसइ, से एएणट्ठेणं० कहि णं भन्ते ! महाविदेहे वासे एगसेले णामं वक्खा-रपव्वए पं० ?, गो० ! पुक्खलावत्तचक्कवट्टिविजयस्स पुरत्थिमेणं पोक्खलावईचक्कवट्टिविजयस्स पच्चत्थिमेणं णीलवन्तस्स दक्खिणेणं सीआए उत्तरेणं, एत्थ णं एगसेले णामं वक्खारपव्वए पण्णत्ते चित्तकूडगमेणं णेअव्वो जाव देवा आसयन्ति, चत्तारि कूडा, तं०—सिद्धायययणकूडे एगसेलकूडे पुक्खलावत्तकूडे पुक्खलावईकूडे, कूडाणं तं चेव पञ्चसइअं परिमाणं जाव एगसेले अ देवे महिड्ढीए । कहि णं भन्ते ! महाविदेहे वासे पुक्खलावई णामं चक्कवट्टिविजए पण्णत्ते ?, गोअमा !, णीलवन्तस्स दक्खिणेणं सीआए उत्तरेणं उत्तरिल्लस्स सीआमुहवणस्स पच्चत्थिमेणं एगसेलस्स वक्खारपव्वयस्स पुरत्थिमेणं, एत्थ णं महाविदेहे वासे पुक्खलावई णामं विजए पण्णत्ते, उत्तरदाहिणायए एवं जहा कच्छविजयस्स जाव पुक्खलावई अ इत्थ देवे परिवसइ, एएणट्ठेणं० । कहि णं भन्ते ! महा-विदेहे वासे सीआए महाणईए उत्तरिल्ले सीआमुहवणे णामं वणे प० ?, गोअमा ! णीलवन्तस्स दक्खिणेणं सीआए उत्तरेणं पुरत्थि-मलवणसमुद्दस्स पच्चत्थिमेणं पुक्खलावइचक्कवट्टिविजयस्स पुरत्थिमेणं, एत्थ णं सीआमुहवणे णामं वणे पण्णत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सोलसजोअणसहस्साइं पञ्च य बाणउए जोअणसए दोण्णि अ एगूणवीसइभाए जोअणस्स आयामेणं सीआए महाणईए अन्तेणं दो जोअणसहस्साइं नव य बावीसे जोअणसए विक्खम्भेणं तयणंतरं च णं मायाए २ परिहायमाणे २

सीआए महाणईअंतेणं एगं एगूणवीसइभागं जोअणस्स विक्खंभेणंति, से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सपरिक्खित्तं वण्णओ सीआमुहवणस्स जाव देवा आसयन्ति, एवं उत्तरिल्लं पासं समत्तं । विजया भणिआ । रायहाणीओ इमाओ—खेमा १ खेमपुरा २ चेव, रिट्ठा ३ रिट्ठपुरा ४ तहा । खग्गी ५ मंजूसा ६ अविअ, ओसही ७ पुंडरीगिणी ८ ॥ १ ॥ सोलस विज्जाहरसेढीओ तावइआओ अभिओगसेढीओ सव्वाओ इमाओ ईसाणस्स, सव्वेसु विजएसु कच्छवत्तव्वया जाव अट्ठो रायाणो सरिसणामगा विजएसु सोलसण्हं वक्खारपव्वयाणं चित्तकूडवत्तव्वया जाव कूडा चत्तारि २ बारसण्हं णईणं गाहावइवत्तव्वया जाव उभओ पासिं दोहिं पउमवरवेइआहिं वणसंडेहि अ वण्णओ ( सूत्रं ९५ )

'कहि णं' इत्यादि, सर्वं सुगमं कच्छतुल्यवक्तव्यत्वात्, नवरं खेमपुरा राजधानी सुकच्छनामा राजा चक्रवर्ती समुत्पद्यते, निजवमाणकादिकं तथैव सर्वं वक्तव्यमिति शेषः । उक्तः सुकच्छः, अथ प्रथमान्तरनद्यवसरः—'कहि णं भन्ते !' इत्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावत्या अन्तरनद्याः कुण्डं—प्रभवस्थानं ग्राहावतीकुण्डनाम कुण्डं प्रज्ञप्तम्?, गौतम ! सुकच्छस्य विजयस्य पूर्वस्यां महाकच्छस्य विजयस्य पश्चिमायां नीलवतो वर्षधरपर्वतस्य दाक्षिणात्ये नितम्बे, अत्र—सामीप्येऽधिकरणे सप्तमी तेन नितम्बसमीपे इत्यर्थः, अत्र जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावतीकुण्डं प्रज्ञप्तं, यथैव रोहितांशाकुण्डं तथैवास्यापि विंशत्यधिकशतयोजनायामविष्कम्भमित्यादिरीत्या ज्ञेयं, कियत्पर्यन्तमित्याह—यावद् ग्राहावती द्वीपं भवनं चेति, उपलक्षणं चैतत्, तेनार्थेन सूत्रमपि भावनीयम्,

तथाहि—'से केणट्ठेणं भन्ते! एवं वुच्चइ गाहावई दीवे गाहावई दीवे?, गोअमा! गाहावईदीवे णं बहवे उप्पलाइं जाव सहस्सपत्ताइं गाहावईदीवसमप्पभाइं समवण्णाइं' इत्यादि, अथास्माद्या नदी प्रवहति तामाह—'तस्स ण'मित्यादि व्यक्तं, नवरं ग्राहाः—तन्तुनामानो जलचरा महाकायाः सन्त्यस्यामिति ग्राहावती, मतुप्प्रत्यये मस्य वत्वे ङीप्रत्यये रूपसिद्धिः दीर्घत्वं चाराकृतिगणत्वात् 'अनजिरादिबहुस्वरशरादीनां मतौ' (श्रीसिद्ध० अ०३ पा०२ सू०७८) विस्तरेण, महानदी प्रव्यूढा सती सुकच्छमहाकच्छौ विजयौ द्विधा विभजन्ती २ अष्टाविंशत्या नदीसहस्रैः समग्रा—सहिता दक्षिणेन भागेन—मेरोर्दक्षिणदिशि शीतां महानदीं समुपसर्पति, अथास्य विष्कम्भादिकमाह—'गाहावई ण'मित्यादि, ग्राहावती महानदी प्रवहे—ग्राहावतीकुण्डनिर्गमे मुखे—शीताप्रवेशे च सर्वत्र मुखप्रवहयोरन्यत्रापि स्थाने समा—समविस्तरोद्वेधा, एतदेव दर्शयति—पंचविंशत्यधिकं योजनशतं विष्कम्भेन, अर्द्धतृतीयानि योजनान्युद्वेधेन, सपादशतयोजनाना पंचाशत्तमभागे एतावत एव लाभात्, पृथुत्वं च प्रागवत्, तथाहि—महाविदेहेषु कुरुमेरुभद्रशालविजयवक्षस्कारमुखवनव्यतिरेकेणान्यत्र सर्वत्रान्तरनद्यः, ताश्च पूर्वापरविस्तृतास्तुल्यविस्तारप्रमाणास्तत एव तत्करणावकाशः, तत्र मेरुविष्कम्भपूर्वापरभद्रशालवनायामप्रमाणं चतुःपंचाशत्सहस्राणि विजय१६पृथुत्वं पंचत्रिंशत्सहस्राणि चतुःशतानि षडुत्तराणि वक्षस्कार ८ पृथुत्वं चत्वारि सहस्राणि मुखवनद्वय २ पृथुत्वं ५८४४, सर्वमीलनेन नवनवतिसहस्राणि द्वे शते पंचाशदधिके, एतज्जम्बूद्वीपविष्कम्भलक्षाच्छोध्यते शोधिते च जातं सप्तशतानि पंचाशदग्राणि, एतच्च

स्पष्टं, नवरं यावत्पदात् 'तत्थ णं अरिट्ठाए रायहाणीए महाकच्छे णामं राया समुप्पज्जइ, महया हिमवन्त जाव सव्वं भरहोअवणं भाणिअव्वं, णिक्खमणवज्जं सेसं भाणिअव्वं, जाव भुंजइ माणुस्सए सुहे, महाकच्छणामधेज्जे' इति ग्राह्यं, ईदृशेनाभिलापेनार्थो महाकच्छशब्दस्य भणितव्यः । सम्प्रति ब्रह्मकूटप्रश्नः—'कहि णं'मित्यादि, सर्वं व्यक्तं, ब्रह्मकूटनामा द्वितीयो वक्षस्कारः चित्रकूटातिदेशेन यावत्पदादायामसूत्रादिकं भूमिरमणीयसूत्रान्तं च सर्वं वाच्यम्। अथात्र कूटवक्तव्यतामाह—'ब्रह्मकूडे चत्तारि कूडा'इत्यादि, व्यक्तं, नवरं एवं चित्रकूटवक्षस्कारकूटन्यायेन वाच्यं, यावत्करणात् समा उत्तरदाहिणेणं परुप्परंतीत्यादि ग्राह्यं, अर्थो—ब्रह्मकूटशब्दार्थः, 'से केणट्ठेणं भन्ते! एवं वुच्चइ—ब्रह्मकूडे २' इत्यालापकेन उल्लेख्यः, ब्रह्मकूटनामा देवश्चात्र पल्योपमस्थितिकः परिवसति, तदेतेनार्थेनेति सुगमं। अथ चतुर्थविजयः—'कहि णं'मित्यादि, व्यक्तं, परं द्रहावत्याः अन्तरनद्याः पश्चिमायां कच्छगावतीविजयः कच्छा एव कच्छकाः—मालुकाकच्छादयः सन्त्यस्यामतिशायिन इति 'अनजिरे'ति सूत्रे (श्रीसि० अ०३पा०२सू०७८) शरादीनामाकृतिगणत्वेन सिद्धिः, शेषं प्राग्वत्, अथायमनन्तरोक्तो विजयो यस्याः पश्चिमायां तामन्तरनदीं लक्षयितुमाह—'कहि णं'मित्यादि, प्रश्नसूत्रं व्यक्तं,उत्तरसूत्रे आवर्त्तनाम्नः पूर्वदिग्वर्त्तिनो विजयस्य पश्चिमाया कच्छावत्या विजयस्य पूर्वस्यां यावद् द्रहावतीकुण्डं नाम कुण्डं प्रज्ञप्तं शेषं यथा ग्राहावतीकुण्डस्य स्वरूपाख्यानं ग्राहावतीद्वीपपरिमाणभवनवर्णकनामार्थकथनप्रमुखं तथा ज्ञेयं, नवरं द्रहावतीद्वीपो द्रहावतीदेवीभवनं द्रहावतीप्रभपद्मादियोगाद् द्रहावतीति नामार्थः समधिगम्यः, द्रहा—

नीलवतो दक्षिणस्यां शीताया उत्तरस्यां पौरस्त्यलवणसमुद्रस्य पश्चिमायां पुष्कलावतीचक्रवर्त्तिविजयस्य पूर्वस्यां अत्रान्तरे शीता मुखवनं नाम वनं प्रज्ञप्तम्, उत्तरदक्षिणायतेत्यादिविशेषणानि विजयवद्व्याख्येयानि, इह विजयवक्षस्कारगिर्यन्तरनद्यः सर्वत्र तुल्यविस्ताराः वनमुखानि तु निषधसमीपे नीलवत्समीपे चाल्पविष्कम्भानि शीताशीतोदोभयकूलपार्श्वे तु पृथुविष्कम्भानि जगत्यनुरोधात्, तथाहि—पूर्वस्यामपरस्यां च दिशि निषधान्नीलवतो वाऽऽरभ्य जगती वक्रगत्या शीतां शीतोदां वा प्राप्ता, जगतीसंस्पर्शवर्त्तीनि च मुखवनानि, ततस्तदनुरोधाद् दर्शयति—शीतामुखवनखण्डे द्वे योजनसहस्रे नव च द्वाविंशत्यधिकानि योजनशतानि विष्कम्भेन, अत्रोपपत्तिः प्राग्वत्, विजयवक्षस्कारान्तरनदीमेरुपृथुत्वपूर्वापरभद्रशालवनायाममीलने जातानि ९४१५६, अस्य राशेर्जम्बूद्वीपपरिमाणात् शोधने शेषं ५८४४, अस्य शीताशीतोदयोरेकस्मिन् दक्षिणे उत्तरे वा भागे द्वे मुखवने इति द्वाभ्यां भागे हृते आगतानि द्वाविंशत्यधिकान्येकोनत्रिंशद्योजनशतानि २९२२, अत्र च तेवीसे इति पाठोऽशुद्धः, एतच्च पृथुत्वपरिमाणं न सर्वत्र शीताशीतोदयोर्मुखप्रत्यासत्तावेतत्करणावकाशादत्रैव महाविदेहवर्षस्य सर्वोत्कृष्टविस्तारलाभादित्याह—तदनन्तरं च मात्रया २—अंशेनांशेन परिहीयमानं २—हानिमुपगच्छद् नीलवद्वर्षधरपर्वतान्ते एकमेकोनविंशतिभागं योजनस्य विष्कम्भेन, एकां कलां यावत्पृथुत्वेनेत्यर्थः, 'कालाध्वनोर्व्याप्तौ'—(श्रीसिद्ध० अ० २ पा० २ सू० ४२) इति द्वितीया, अत्र करणं—मुखवनानां सर्वलघुर्विष्कम्भो वर्षधरपार्श्वे ततो वर्षधरजीवात इदं करणं समुत्तिष्ठति, तथाहि—प्रस्तुते नीलवज्जीवा चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं योज-

नराशिः ४८४८१८२४, कलाद्वयमपि २९२२ अनेनैव गुण्यते जातः कलाराशिः ५८४४, ततो योजनराशौ ४८४८-१८२४ सवर्णिते जातं ९२११५४६५६ ततः कलाराशिः ५८४४ क्षेपे जातं ९२११६०५०० ततोऽस्य मुखवनायामेन १६५९२ सवर्णितेन कलाद्वययुक्तेन ३१५२५० भागे हृते लब्धं उद्दिष्टस्थाने २९२२ योजनरूपो विष्कम्भः, एवमन्यत्रापि भावनीयम् । अथास्य पद्मवरवेदिकादिवर्णनायाह—'से णं एगाए पउ०'इत्यादि, तन्मुखवनमेकया पद्मवरवेदिकया एकेन च वनखण्डेन समपरिक्षिप्तम् । अथ शीतामुखवनस्य वर्णको वाच्यः—'किण्हे किण्होभासे'इत्यादि, कः कियत्पर्यन्तमित्याह—यावद्देवता आसते शेरते इत्यादि, अत्र विजयदिशि पद्मवरवेदिका गोपिका लवणदिशि तु जगत्येव गोपिका इत्येका, इयं च पद्मवरवेदिका जगतीवन्मुखवनव्याम एवान्तर्लीना, यत्र तु वनव्यामः कलाप्रमाणस्तत्र विजयव्यासं रुणद्धीति तात्पर्यं, अन्यथा विजयादिभिर्जम्बूद्वीपस्य परिपूर्णलक्षपूर्तावुभयतो जगत्यादेः कावकाशः स्यात्, अत एवाह—"अविवक्खिऊण जगइं सवेइयवणमुहचउक्कपिहुलत्तं । गुणतीससयबत्तीसं णइंति गिरिअंति एगकला ॥ १ ॥" [ विवक्षित्वा जगतीं सवेदिकावनमुखचतुष्कपृथुत्वं । एकोनत्रिंशच्छतानि द्वात्रिंशदधिकानि नदीपार्श्वे गिरिपार्श्वे एका कला ॥ १ ॥] इति, अथोपसंहारमाह—'एवं उत्तरिल्लं'इत्यादि, एवं—विजयादिकथनेन उत्तरदिग्वर्त्ति पार्श्वं समाप्तम्, प्राच्यमिति शेषः, प्राक् चतुर्विभागतयोद्दिष्टस्य विदेहक्षेत्रस्य प्राच्योत्तरपार्श्वं विजयादिकथनापेक्षया पूर्णं निर्दिष्टमित्यर्थः । अथ प्रतिविजयमेकैका राजधानीं निर्दिशन्नाह—'विजया'इत्यादि, विजया भणिताः,

अत्र च भणितानामपि विजयानां यत्पुनर्भणनमुक्तं तद्राजधानीनिरूपणार्थं, राजधान्यश्चेमाः पद्यबन्धेन संगृह्णाति, कच्छविजयतः क्रमेण नामतो ज्ञेयाः, क्षेमा १ क्षेमपुरा २ अरिष्ठा ३ अरिष्ठपुरा ४ तथा खड्गी ५ मंजूषा ६ अपि चेति समुच्चये औषधी ७ पुंडरीकिणी ८ इति, एताः शीताया औदीच्यानां विजयानां दक्षिणार्द्धमध्यमखण्डेषु वेदितव्याः, अथैषु श्रेणिस्वरूपमाह—'सोलस विजाहरसेढीओ'इत्यादि, उक्तेष्वष्टसु विजयेषु षोडश विद्याधरश्रेणयो वाच्याः, प्रतिवैताढ्यं श्रेणिद्वयद्वयसम्भवात्, आसु च विद्याधरश्रेणिषु प्रत्येकं दक्षिणोत्तरपार्श्वयोः पञ्चपञ्चाशन्नगराणि वाच्यानि, उभयत्रापि वैताढ्यस्य समभूमिकत्वात्, तावत्यः आभियोग्यश्रेण्यो वाच्याः षोडश इत्यर्थः, सर्वाश्चेमा अभियोग्यश्रेणय ईशानेन्द्रस्य मेरुतः उत्तरदिग्वर्त्तित्वात्, अत्र च विद्याधरश्रेणिसूत्रं आदर्शान्तरेष्वदृष्टमपि प्रस्तावादाभियोग्यश्रेणिसङ्गत्यनुपपत्तेश्च प्राकृतशैल्या संस्कृत्य मया लिखितमस्तीति बहुश्रुतैर्मयि सूत्राशातना न चिन्तनीयेति, उत्तरत्रापि सूत्रकारेण संग्रहगाथायामाभियोग्यश्रेणिसंग्रहो विद्याधरश्रेणिसंग्रहपूर्वकमेव वक्ष्यते। अथ शेषविजयवक्षस्कारादीनां स्वरूपप्ररूपणाय लाघवाशयेनातिदेशसूत्रमाह—'सव्वेसु'इत्यादि, सर्वेषु विजयेषु कच्छवक्तव्यता ज्ञेया, यावदर्थो—विजयानां नाम निरुक्तं, तथा विजयेषु विजयसदृशनामका राजानो ज्ञेयाः, तथा षोडशवक्षस्कारपर्वतानां चित्रकूटवक्तव्यता ज्ञेया यावच्चत्वारि २ कूटानि व्यावर्णितानि भवन्ति, तथा द्वादशानां नदीनां—अन्तरनदीनामित्यर्थः

